# अनाघ्रातं पुष्पम्

सामयिकं संस्कृत कथा संकलनम्

डॉ. प्रशस्यमित्र शास्त्री

# अनाघ्रातं पुष्पम्

नवचिन्तनपरं सामयिकं संस्कृतकथासङ्कलनम्



डॉ॰ प्रशस्यमित्र शास्त्री



प्रकाशक

**स्वामी सत्यप्रकाश प्रतिष्ठान**

**आर्यसमाज, रायबरेली (उ॰ प्र॰)**

भारतसर्वकारस्य राष्ट्रीय-संस्कृत-संस्थानद्वारा प्रदत्तेनाऽऽर्थिकसाहाय्येन प्रकाशितम्



## अनाघ्रातं पुष्पम्


- लेखक
  डॉ० प्रशस्यमित्रः शास्त्री



- प्रथमं संस्करणम् : १९९४
- मूल्यम् : रूप्यकाणि 50/-
- प्रकाशक
  स्वामी सत्यप्रकाश प्रतिष्ठान
  आर्य समाज, रायबरेली (उ० प्र०)
- मुद्रक
  एकेडमी प्रेस
  दारागंज, इलाहाबाद

# ANAGHRATAM PUSHPAM

( A Selection of Modern Sanskrit Stories )

*AUTHOR*

**Dr. PRASHASYA MITRA SHASTRI**

Reader–Feroze Gandhi College, Rae Bareli

*Published by*

SWAMI SATYA PRAKASH PRATISHTHAN

ARYA SAMAJ, RAE BARELI – (U. P.) 229001

Published with the Financial Assistance from the
RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI

ANAGHRATAM PUSHPAM

• AUTHOR
**Dr. Prashasya Mitra Shastri**
• **First Edition : 1994**
• **Price : Rs.** 50/-
• PUBLISHED BY
**Swami Satya Prakash Pratishthan**
Arya Samaj Rae Bareli. (U. P.)
• Printed By
ACADEMY PRESS
Daraganj, Allahabad

# अस्मदीयम्

संस्कृतभाषायाम् आधुनिकानि कथानकानि प्रायशोऽल्पीयांस्येव लिखितानि वर्त्तन्ते । क्वचिदेव यत्र तत्र नवविषयान् समस्याश्चाऽधिकृत्य लेखकाः कथानां लेखनं कुर्वन्ति । साम्प्रतं मनुष्याणां समक्षं जीवनस्य संग्रामे विविधा विचित्राश्च समस्याः समागच्छन्ति । यदि साहित्यं समाजस्य दर्पणं कथ्यते तदा समकालीनस्य समाजस्य चित्रणं तत्कालीने साहित्ये भवितव्यम् एव । साम्प्रतमपि संस्कृतलेखकाः प्रायः प्राचीन-रामायणमहाभारतादिग्रन्थेषु विद्यमानानां प्राचीनकथानकानाम् आलम्बं विधायैव गीतिकाव्यं महाकाव्यं वा लिखन्ति । संस्कृतसाहित्ये गद्यकाव्यलेखनस्य प्रवृत्तिः प्राक्कालादेव न्यूनत्वं भजते स्म ।

यद्यपि बहवः संस्कृतलेखका नवविषयान् अधिकृत्याऽपि स्वकीयरचनाः प्रस्तुवन्ति परन्तु तेषां तथाविधा रचना अपि पूर्णतः प्राचीनोपजीव्यग्रन्थानां रचना-शैल्याः प्रेतच्छायया मुक्ता न वर्त्तन्ते । साम्प्रतमपि ते गिरीणाम् उपह्वराणां वनानाम् उपवनानां वा तथैव वर्णनं व्याहरन्ति यथा प्राचीनेषु काव्येषु कृतं वर्त्तते ।

सम्प्रति सीमेन्टनिर्मितानां जंगलानाम् अर्थात् महानगराणां समस्या अधिकृत्य कियन्तः संस्कृतलेखका लिखन्ति ? महानगरेषु विद्यमानानां राजपथानामुपरि धावतां वाहनानां दुर्घटनाजन्यविषयमवलम्ब्य कियन्तो वर्णयन्ति ? धीरोदात्तनायकम् अनन्य-सुन्दरीं नायिकां च तिरस्कृत्य साधारणं बुभुक्षितजनं पीडितां महिलां चाऽधिकृत्य कियन्ति महाकाव्यानि प्रकाश्यन्ते ? महानगरीय-संस्कृति-प्रदत्त-महार्घतापीडां गृह-विहीनता-व्यथां नियोजनहीनतासमस्यां खण्डितपरिवाराणां पृष्ठभूमिं च विचार्य कियन्ति कथानकानि प्रस्तूयन्ते ? ।

तत्सर्वम् अनुचिन्त्यैव मया कथासंकलनेऽस्मिन् जनानां नानाविधाः समस्याः समधिकृत्य मानवीया अनुभूतीर्निरूप्य व्यथाः विचार्य प्रवञ्चनाश्च परिलक्ष्य द्वादश-कथानां प्रस्तुतिः कृता ।

तत्र प्रथमे कथानके मानवस्य सहजां मानसिक-दुर्बलतां निरूप्य ततः परि-स्थितिजन्यं कालजन्यं च विचारपरिवर्त्तनमपि कथं सञ्जायते इति सातिशयं निरूपितम् ।

द्वितीये कथानके स्त्रीपुरुषयोर्मध्ये चिन्तनानां स्वभावानाम् अभिरुचीनां च समानताः कथं शारीरिकसम्बन्धस्थापनार्थमपि क्वचित् प्रेरयन्तीति निरूप्य तज्जन्यं मानसिकमन्तर्द्वन्द्वं सबलं प्रस्तुत्य नारीमनसो वेदनायाश्चित्रणं समुपस्थापितं वर्त्तते ।

तृतीये कथानके धनवतः सामर्थ्ययुक्तस्य पुरुषस्य समक्षं दरिद्रपुरुषस्य का स्थितिः समाजे वर्त्तते इति ध्वनितम् । दरिद्रास्तु स्वजीवनमपि कर्त्तव्यपालने जुह्वति परन्तु धनिकाः स्वकीयं कर्त्तव्यं विस्मृत्य निर्धनानां विनम्रनिवेदनं श्रोतुमपि न समीहन्ते ।

चतुर्थे कथानके तु साम्प्रतिके समाजे निकटतमसम्बन्धिनाम् अपेक्षया दूरस्थोऽपि कश्चित् कथम् आत्मीयत्वम् अनुभावयतीति सशक्तमुपपादितम् ।

पञ्चमे कथानके युवकयुवत्योः स्वाभाविकाऽऽकर्षणसम्बन्धबिन्दुं निरूप्य व्यंग्य-पूर्वकं मनोरञ्जनपुरःसरं च समुत्पादितं यत् दारिद्र्यम् अनाभिजात्यं च योग्यतया पदप्राप्त्या च निवारयितुं शक्यते । साम्प्रतं च रूपयौवनकुलाऽपेक्षया विशिष्टसेवा-नियोजनमेव वैशिष्ट्यं भजते ।

षष्ठे कथानके मानसिकाऽन्तर्द्वन्द्वस्य चित्रणपुरःसरं कोमलनारीहृदये परि-स्थितिवशात् कथं रूक्षताः कठोरताश्च प्रादुर्भवन्तीति भावः यथासम्भवं सबलं प्रस्तुतीकृतः ।

सप्तमे कथानके भारतीयग्रामीणजना: कथम् ईर्ष्याबुद्धिग्रस्ता भूत्वा केवलं परोत्पीडनायैव न्यायालयेषु व्यर्थमेव वादं प्रस्तुवन्ति, तत्राऽपि च केचिद् अशिक्षिता अपि ग्रामीणा महात्मनां सदृशं मतिमालभ्य लोकहितभावनया परोपकारमेव समीहन्ते—इति समुत्पादितम् ।

अष्टमे कथानके तु भारतीयसमाजेऽनभीप्सितविवाहसम्बन्धा विवशतया स्वीकृता: सन्त: पश्चात्काले कथङ्कारं कठिनां परिस्थितिं जनयन्तीति निरूप्य रूढिगतजातिव्यवस्थया समं नवपरिवेशव्यवस्थाया: कथं सङ्घर्ष: प्रवर्त्तते—इति सम्यग्वर्णितम् ।

नवमे कथानके विवाहेतरसम्बन्धस्थापनाया: कारणानि, समाजे तस्य प्रभाव:, नारीहृदयस्य च विशालता सहनशीलता सामञ्जस्यस्थापना च चित्रिता वर्त्तते ।

दशमे कथानके तु मानवस्य स्वार्थभावनायाश्चित्रणपुर:सरं किशोराणामन्तर्मानसे समुत्पन्नस्य सहजस्नेहस्य मनोरञ्जिका प्रस्तुतिर्वर्त्तते ।

एकादशे कथानके तु पारस्परिकम् आत्मीयं च प्रेम भौतिकं सुखं सौविध्यं च कथमपि न कामयते इति निरूप्य दाम्पत्यसुखस्य कारणं मानसिकं सामञ्जस्यम् आन्तरिक: स्नेहसम्बन्धश्च भवतीति समुपवर्णितम् ।

द्वादशेऽन्तिमे च कथानके साम्प्रतिकनागरीयजीवनस्य समस्या:, तज्जन्य: पारस्परिकसम्बन्धेषु प्रभावस्तन्मूलकं स्वार्थचिन्तनं च निपुणतया निगदितं विद्यते ।

मन्ये सुधिय: पाठका विद्वांसश्च प्रस्तुतानामेतासां कथानां माध्यमेन वर्त्तमानस्य सामाजिकस्य परिवेशस्य चिन्तनस्य च पर्याप्तमनुभवं संस्कृतसाहित्ये समधिगत्य प्रसादमनुभविष्यन्तीति सविनयं निवेदयति—

**संस्कृत-दिवस : श्रावणपूर्णिमा**
२१ अगस्त, १९९४ ई०

**संस्कृतसाहित्यसेवक:**
**प्रशस्यमित्र: शास्त्री**
बी २९ आनन्द नगर (जेलरोड)
रायबरेली-२२९००१

# प्राक्कथनम्

ग्रन्थिपर्णप्रणयाः कस्तूरिकामृगा यथा तृणान्तरं नाभिवाञ्छन्ति, कथासु लब्धरसाः सहृदयास्तथैव काव्यप्रकारान्तरेऽश्रद्धधानाः संलक्ष्यन्त इति निगदति शारदादेशाभिजनो बिल्हणोऽधिविक्रमाङ्कदेवचरितम् । वस्तुतः श्रव्यकाव्यं स्वेतिवृत्तवर्णनकौशलेन श्रोतॄणां हृदयान्याकर्षति । कथा पुनः काण्डात्काण्डं वर्धमानेन रोमाञ्चेन तेषां हृदयानि साक्षात् सुदृढं निगडयत्येव, येन तत्पदात्पदमपि क्वचिदितस्ततो गन्तुं न व्यवस्यति ।

प्राक्तने किल वैदिकवाङ्मयेऽपि कथाया अनितरसाधारणत्वं परिलक्ष्यते । विपुलसंविधानकेषु लक्षकोटिव्ययसाध्येषु च दर्शपौर्णमासवाजपेयप्रभृतिषु महाऽध्वरेषु समागतानां जनानां मनोरञ्जनार्थं लघुकथानां वाचनव्यवस्था यज्ञवाटेषु क्रियते स्म । यज्ञानां गूढातिगूढं परिज्ञेयरहस्यं विवृण्वाना इमाः प्रतीककथाः परप्रत्ययनेयबुद्धीनां पामराणां प्राज्ञानाञ्च हृदयपरितोषं समरूपतया विदधुः । प्राज्ञास्तावदेकतः प्रतीकावलम्बा अध्वर-

रहस्यं साधु विदुः। पामरास्तावदपरतः कथाया बहिस्सविधानोच्छलद्रस-माधुरीमाकण्ठं पेपीयमानास्तुष्टेः परां काष्ठामुपगताः। द्विविधोऽयं रसप्रवाहः कथायामेव सम्भवति, न पुनर्महाकाव्यादिषु काव्यप्रकारेषु। अतएव कथाऽऽह्लादो निश्चप्रचमतिशेते काव्याहलादम्।

यद्यपीदानीं बादरायणसम्बन्धः कश्चिद्रूढः परिलक्ष्यते कथागद्ययोः। परन्तु नायं सम्बन्धः परमार्थतो ग्राह्यः। गद्यं पद्यञ्चोभयमपि कथाऽभिव्यक्तिसाधनं चिरकालादेव। ऋग्वेदाद्युपलब्धा विविधाः कथा मन्त्रात्मिकाः क्वचिच्च गाथानिबद्धाः। उपनिषत्कथाश्चम्पूशैल्या एव वर्णिता दृश्यन्ते। एवं हि विपुलसृतयो विपुलगतयो विपुलस्वरूपाश्चावाप्यन्ते प्राक्तन्यः कथाः।

संस्कृतकाव्यशास्त्रे प्रतिष्ठिते सति वाङ्मयव्यवस्था शनैः शनै रूढिमभजत। नाट्याचार्यो भरतः, मेधाविरुद्रो भामहो दण्डीति सर्वेऽप्याचार्याः शोधं-शोधं, परिष्कारं परिष्कारं निखिलमपि वाङ्मयं व्यवस्थापयामासुः। वाङ्मयं प्रथमं तावत् दृश्यश्रव्यत्वभेदाभ्यां द्विधा व्यवस्थितम्। ततश्च दृश्यं दशरूपकैरष्टादशोपरूपकैः प्रतननमवाप। तदनु श्रव्यं गद्यपद्यचम्पूमाध्यमेन त्रैविध्यमुपगतम्। ततश्चापि गद्यं कथाऽऽख्यायिकात्मकं, पद्यं महाकाव्यखण्डकाव्यात्मकं, चम्पूश्चापि जयघोषणाविरुदावली-रत्नावली-प्रभृतिभेदैर्विविधाऽवलोक्यते।

काव्यशास्त्रसम्मतेयं कथाऽपि लेखनशैलीभेदमवलम्ब्य द्विधा सञ्जाता—पद्यमयी, गद्यमयी च। पद्यमयीनां कथानां मूलनिस्यन्द आसीद् गुणाढ्यप्रणीता भूतभाषोपनिबद्धा बृहत्कथा, कालकवलिता अपि यदक्षतप्ररोहाः सम्प्रति सौभाग्यवशादुपलभ्यन्त एव। तत्र संस्कृतायां वाचि क्षेमेन्द्रप्रणीता बृहत्कथामञ्जरी, सोमदेवोपज्ञः कथासरित्सागरो, बुधस्वामिविहितो बृहत्कथाश्लोकसङ्ग्रहश्चेति त्रयो ग्रन्था संरक्षिताः। प्राकृतायां (अपभ्रंशायां) वाच्यपि वसुदेवहिण्डीति बृहत्कथारूपान्तरमवाप्यते। एताः सर्वा अपि कथाः पद्यमय्यः। अनुष्टुब्बहुलाः सत्योऽपि मध्ये-मध्ये वृत्तान्तरसम्मिश्राः सन्दृश्यन्ते सर्वा अपि। लोकेतिवृत्तनिबन्धनवशात् लोककथाभिख्ययाऽपि प्रत्यभिज्ञायन्त इमाः।

असङ्कीर्णा गद्यकथा-परम्पराऽपि नातिलघ्वी। अत्रापि सिंहासन-द्वात्रिंशिका-वेतालपञ्चविंशतिका - शुकसप्तति-भरटकद्वात्रिंशिकाद्या रचनाः सम्प्राप्यन्ते। एतासु कथासु वृत्तवर्णनं केवलं गद्यावलम्बि। ततश्च कथानां

तृतीयाऽपि कापि पाटी समवलोक्यते गद्यपद्योभयप्रचुरा । इयं तृतीया कथापरम्परा लोकमानसं जिगाय स्वेतिवृत्तवैशिष्ट्यवशात्, कथायाः पात्रत्वेन पशुपक्षिसमवायोपादानाच्च । विष्णुशर्मप्रणीतं पञ्चतन्त्रं शिरोरत्नायते कथावाङ्मयेऽस्मिन् । नारायणोपज्ञो हितोपदेशोऽपि तत्समामेत्र लोकप्रियतां भजते । इत्येवं कथोद्भवविकासेतिहासः ।

गौराङ्गशासनकाले संस्कृताध्ययनाध्यापनयोः सशास्तृसाहाय्यं पुनर्जागरणे सम्पादिते सति महाकाव्यादीनामिव कथालेखनस्यापि नवोपक्रमः समजनि । पण्डिता क्षमारावमहोदया भट्टमथुरानाथशास्त्री, अन्ये चापि तद्युगीनाः साहित्यकृतः शतमिताः कथाः प्रणिन्युः । भट्टमथुरानाथशास्त्रिप्रणीताः प्रायेण पञ्चत्रिंशन्मिता उत्कृष्टाः कथाः सहृदयसमज्यासु सविशेषं चर्चिता बभूवुः । तदनन्तरं चापि समग्रे राष्ट्रे कथाप्रणयनमनवरतगत्या सञ्जातम् । परन्तु धर्मभाषारूढिपरम्परादिभिर्दृढं नियमिताः संस्कृतकथाकारा गताऽनुगतिका एव तस्थु । कथालेखनेऽनुप्रासश्लेषविरोधाभासपरिसंख्याद्यलङ्काराणां प्रतिपदप्रयोगस्तेषां सांस्कारिकं दौर्बल्यमासीत् । शक्तिविकलेऽपि स्वकीयगद्यबन्धे कादम्बरीशब्दाडम्बरविच्छित्तिं नलचम्पूश्लेषसौन्दर्यं च समुपजनयितुं ते व्यामुग्धा आसन् । अतएव मयूरव्यंसकायमानानां तेषां सर्वोऽपि प्रयत्नो निष्फलतां गतः । न खल्ववाप्तं बाणभट्टत्वं न चापि प्रणेतुमशक्यत कापि द्वितीया कादम्बरी ! ।

वस्तुतो यातायातस्रोतसां विकासेन, चलचित्रध्वन्यङ्कन (टेपरिकॉर्डर) दूरभाष-सूक्ष्मतरङ्ग (माइक्रोवेव) कम्प्यूटरोपग्रहादिमाध्यमव्यवस्थया ज्ञानविज्ञानवाङ्मयप्रणयनक्षेत्रेषु च सम्प्रति महद् युगान्तरं समुत्पन्नम् । अद्य सर्वोपि कथाकारः सुष्ठु वेत्ति यदाङ्ग्ल्यां कीदृश्यः कथा लिख्यन्ते, चीनभाषायां, जापानभाषायां तुरुष्कभाषायां वा कीदृग्विधाः कथाः प्रणीयन्ते ? एतत्सर्वं परिज्ञायैव स किञ्चिदभिनवं प्रणेतुमुद्युङ्क्ते । एवमकुर्वाणः साहित्यकारः (कविः कथाकृद्वा) निश्चप्रचमुपहास्यतां याति ।

एवं हि संस्कृतकथापरम्परायामपि तादृशमेव किञ्चिन्नूतनमभियानमपेक्षितमासीत् कथाया प्रतिष्ठादृष्ट्या । ईदृशं रचनाभियानं, यस्मिन् प्रतिपदनवीनत्वं स्यात् ! शब्दगुम्फानां नवीनत्वं, संवेदनानां नवीनत्वं, लेखनशैल्या नवीनत्वं, कथाशिल्पस्य नवीनत्वं, लोकवृत्तोपादानस्य नवीनत्वमिति । एतस्मिन् सम्पन्ने सत्येव संस्कृतकथायाः भाषान्तरसमकक्षप्रतिष्ठा सम्भवाऽऽसीन्नाऽन्यथा ।

टॉल्सटॉय-गोर्की तुर्गेनेव- मोपासॉ-सामरसेटमॉम - बर्नार्डशा-गाल्सवर्दी-प्रभृतीनां भारतेतरकथाकाराणां भारतस्य चापि विविधभाषाकथाकाराणां रचना-चया मूलभाषया हिन्दीरूपान्तरमाध्यमेन वा पत्रपत्रिकासु पाठं-पाठं मयाऽभिराजराजेन्द्रेणेदमनुभूतं यत् संस्कृतकथावाङ्मयं सर्वथा गताऽनुगतिकं, रूढ़िग्रस्तं, नव्यप्रस्थानविरहितं, राष्ट्रियसमस्याऽसम्पृक्तं प्राक्तनपरम्परा-मात्रपोषकं नव्यसंस्कृतवाङ्मयलाङ्गूलकल्पश्च तिष्ठति । कथाऽपेक्षयाऽन्यासां वाङ्मयविधानां विकासः परं स्थेमानं नूतनत्वं भाषान्तरसमकक्षताञ्चावहते । एतत्सर्वं सम्यगनुभूयैव मयाऽभिनवकथासर्जना प्रारब्धा यस्याः प्रथमं सङ्कलनम् इक्षुगन्धाभिधानं १९८६ मिते ख्रिस्ताब्दे प्राकाश्यमुपगतं १९८८ मितसत्रे च स्पृहणीयतमां साहित्य-अकादमी-पुरस्कारपात्रतामवाप । इक्षु-गन्धायाः पुरस्कृतिसंस्तुतौ समीक्षकप्रवरः श्रीपाण्डुरंगरावमहोदयो यद्वाचिक-मुदाजहार तदभिनवसंस्कृतकथासर्जनाया वैशिष्ट्यमभिव्यनक्ति । तन्न केवलं मम कृतेऽपितु समेषामेव नव्यसंस्कृतकथाकाराणां कृते प्रेरणास्पदं सिध्यति । निगदति रावमहोदयः—

......The situations are mostly realistic, thought-provoking, entertaining and enlightening to a large extent. But the real merit of the work lies, not in the material but in the manner in which it is presented. Container attracts us more than the content. The secret behind this material management is the rare combination of poetic expression and pleasant imagination which the author has acquired by virtue of his scholarship and sincerity.

The language used in the stories is so simple, lucid and accessible even to the common man that a student of sanskrit language can also benefit by going through these pages as lessions in conversational Sanskrit......

The basic quality of life—the desire to live or जिजीविषा as it is called, forms the keynote of the stories, incorporated in this small collection, very aptly captioned इक्षुगन्धा.

—Indian Literature No. 132.
Sahitya Akadami, New Dehli.

इयं समीक्षैव सर्वं विशदीकरोति। अधुनातनसंस्कृतकथायां किं किं वैशिष्ट्यमपेक्ष्यत इति स्फारीभवति समीक्षयाऽनया। सद्यः प्रकाशिते मदुपज्ञे-ऽभिनवकथासंकलने राङ्गडाऽभिधेऽपि संकलिताः सर्वाः कथा यावच्छक्यं समीक्षामिमां समाद्रियन्ते। यदहं स्वकथासु विन्यस्यामि, यथाऽहं कथासूत्रं व्यातनोमि, यत्कथाशिल्पं यां कथाशैलीं वा स्वायत्तीकरोमि तत्सर्वमेव स्वमित्रेभ्योऽपि सस्नेहमपेक्षे।

वस्तुतः इतिवृत्तवर्णनमात्रमेव न भवति कथा। आत्मानुभवाऽभिव्यक्तिरपि न भवति कथा। कथा नाम प्रसूनान्तरालसमाविष्टं तादृशं किञ्चित्सौरभ्यं यत्खलु प्रणष्टे सत्यपि पुष्पकलेवरे समग्रमपि वातावरणं प्रसह्य सुगन्धयति। कथायां केनचित्सन्देशेन भवितव्यम्। यदि कथायां किञ्चिन्मर्मस्पर्शि कमनीयमुद्देश्यं न वरीवर्ति तर्हि किं कृतं तया कथया ?। कथागतसंवेदनाया विस्तारे कथाकृत्प्रतिभा भावयित्री भवति सहायिनी। प्रतिभैव सर्ववैशिष्ट्यमूलम्।

कथाया भाषाऽपि परं प्रथिमानं भजते। गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ! परन्तु यदि प्रमादा एव कथाकृत्सम्पत्तिभूताः स्युस्तर्हि साञ्जलिपुटप्रणामं कथालेखनाद् विरतिः प्रयाच्यते ! वागधिष्ठात्र्याः कुन्देन्दुधवले मुखमण्डले कालुष्यलेपनेन को लाभः ? शब्दानां प्रायुज्यमानानां लिङ्गं न ज्ञायते ! एकस्मिन्नेवाऽनुच्छेदे प्रथमवाक्यं कर्तृवाच्यताश्रितं द्वितीयञ्च कर्मवाच्याश्रितम् ? यत्कथयितुमिष्यते तदेवाऽभिधातुं न पार्यते शब्दैः ! किमेतत्सर्वम् ? अशक्तया न शक्यते।

यथा खलु विषधराणां ग्रहणात्प्राक् विषापहारमंत्रसिद्धिरपेक्ष्यते तथैव साहित्यरचनातः प्राक् तत्साधना कर्तव्या। इयं च साधना पाठं पाठं ग्रन्थरत्नानि स्वोत्तमवृद्धानां, ध्यायं-ध्यायं च व्याकरणकोषादीनि शनैः शनैः परिपाकमेति। अपरिपक्वसाधनया सत्साहित्यनिर्माणं सर्वथाऽसम्भवम्। अतएव नव्या मया नितरां प्रार्थ्यन्ते साहित्यसाधनापरिष्कारार्थम्। कृपया लीलाधिया न प्रणयन्तु साहित्यम्। प्रणयन्तु साहित्यं कल्पान्तस्थायिकीर्त्यर्थम्। प्रणयन्तु साहित्यं सहृदयजनमनोरञ्जनार्थम् अभिनवप्रस्थानप्रतिष्ठापनार्थम् !।

अर्वाचीनसंस्कृतसाहितीजगतो लोकप्रियो व्यङ्ग्यकविः श्रीप्रशस्यमित्र एतत्सर्वं संस्कृतकथावैशिष्ट्यं चरितार्थयते स्वोपज्ञकथासु। समसामयिकं नवचिन्तनपरं रुचिरं कथासंकलनं तदुपज्ञम् **अनाघ्रातं पुष्पम्** इत्यभिधेयं

निश्चप्रचं संस्कृतकथासाहित्यस्य श्रीवृद्धिमातनुत इति मम द्रढीयान् विश्वासः ।

प्रशस्यमित्रप्रणीताः सर्वा अपि कथाः प्रासङ्गिक्यः प्रतिभान्ति । क्वचिन्मानवहृदयदौर्बल्यं, क्वचिदन्तर्द्वन्द्वं गूढवेदनोपरूढं क्वचिदसामञ्जस्यं वा मानसं तत्कथासूत्रतामेति । तत्सर्वं समुचितपात्रचयनैः संवादकल्पनै-र्व्यवस्थावर्णनैश्च सम्यक् प्रतनोति कथाकारः । समकालीनकथाकाराणां डॉ॰ राधावल्लभत्रिपाठि (सागरम्) डॉ॰ श्रीनिवासदीक्षित (आन्ध्रप्रदेशः) अशोकपुरनाट्टुकर-(त्रिचूर) डॉ॰ कैशवचन्द्रदाश-(पुरी) प्रभृतीनां स्वसमाज-स्थितिवर्णनपद्धतिः प्रशस्यमित्रकथास्वपि समवेक्ष्यतेंऽशतः । तच्च महते परितोषाय ।

स्वस्ति कथाकाराय कथाभ्यश्च ! ॥

**—मिश्रोऽभिराजराजेन्द्रः**

आचार्यः संस्कृतविभागस्य

हिमाचलप्रदेश विश्वविद्यालय, शिमला

# कथाक्रमः



□□

अथ

# अनाघ्रातं पुष्पम्

समसामयिकं नवचिन्तनपरं रुचिरं संस्कृतकथासंकलनम्

सौन्दर्यं सत्कथानां सहृदयसदने स्यन्दते देवसिन्धौ,
इन्दोः पीयूषबिन्दुर्विनिपतति यथा पावयन् वारिराशिम् ।
नव्यं दिव्यं सुगन्धं बहुविधमधुना चिन्तनं चापि चित्रम्,
सम्प्रस्तोष्यत प्रशस्यं सुविकसति जगत्याम् अनाघ्रातपुष्पम् ।।

# सीतया रावणो हतः

अस्माकं सर्वेषां हृदि कश्चित्पशुस्तिष्ठति यः खलु प्राप्तावसरः सन् बहिरायाति। सौभाग्यात् मया प्रथमाक्रमणकाले तु स पशुराहतः, किन्तु भविष्यत्काले कदा पर्यन्तमहं विजयी भविष्यामीति तु परमेश्वर एव जानाति।

तदानीन्तनम् एतद् वृत्तान्तं यदाऽहं स्नातक-परीक्षामुत्तीर्य एम्० ए० परीक्षायाम्प्रविष्टोऽभूवम्। अस्माकं दूरसम्बन्धस्थो ज्येष्ठभ्रातृतुल्यः श्री जीवनदत्तस्तदा एकस्मिन् पर्वतीयप्रदेशे नियुक्त आसीत्। ग्रीष्मावकाशे मया पर्यटनभावनया तत्रैव गन्तुं विचारितम्। षण्मासपूर्वमेव भ्रातृमहोदयस्य विवाहोऽपि सम्पन्न आसीत्। तदानीम् अस्माकं परीक्षासमय आसीद्, अत एव तेषां विवाहवेलायाम् उपस्थितो नाऽभवम्, किन्तु साम्प्रतं तत्र गमनस्येदमपि प्रयोजनमासीत् यदहं क्षमायाचन-पुरःसरं भ्रातृजायाया दर्शनमपि विधास्यामि।

तस्मिन् काले त्वस्माकं यौवनोन्मादः कश्चिद् विचित्र एवाऽभवत्। प्रतीयते स्म यत् स अनियन्त्रितो भूत्वा कस्मिंश्चिदपि क्षणे संयमबन्धं नाशयिष्यति। बी॰ ए॰ कक्षायां मया कालिदासस्य मेघदूतम् पठितमासीत्। यदापि यक्षकृतं प्रेमिकायाः स्वरूपवर्णनं स्म्रियते स्म तदा मनः पुलकितमिवाऽभवत्। विचारयामि स्म यदेवंविधं रूपं किं कदाचिद् दृष्टिपथमागमिष्यति ? शाकुन्तलं कुमारसम्भवं चापि सम्यगधीतवान् । दर्शनग्रन्था उपनिषद्ग्रन्थाश्च सदैव मम पुस्तकालये भवन्ति स्म । भर्तृहरेः शतकत्रयमप्यधीतवान्। यदा मम मनसि दार्शनिकी प्रेरणा समुदेति स्म तदा सौन्दर्यस्य क्षणभङ्गुरतामपि विचारयामि स्म । श्मशाने विद्यमानाः कपालखण्डास्तदा मां स्मारयन्ति स्म यत् क्व गतानि तानि मुखकमलानि यत्र कदाचित् प्रेमिभ्रमरा भ्रमन्ति स्म ? कुत्र गतास्ते कटाक्षनिक्षेपा ये प्रेमिणं विध्यन्ति स्म ? क्व गतास्ते ओष्ठसौष्ठवा ये सुराभ्योऽप्यधिकं मादयन्ति स्म ? कुत्र गतास्ते रससिक्ता मधुरस्वरा ये मनसि वीणारवं जनयन्ति स्म ?

अस्तु, अस्यामेवविधायामेव मनःस्थित्यामहं तं पर्वतप्रदेशं भ्रातृमहोदयं भ्रातृजायां च संगन्तुं प्राप्तवान्। भ्रातृमहोदयो मामवलोक्य प्रसन्नः सन् गृहाऽभ्यन्तरे स्थितां मम भ्रातृजायाम् आहूतवान्। सा बहिरागतवती। भ्रातृजाया प्रथमं वारं मां पश्यति स्म, अहं चापि तथैव । उभावप्यावां परस्परम् अन्योन्यं विलोक्य निश्चलनयनौ हृतचेतनौ च सञ्जातौ।

भ्रातृजायायाः सौन्दर्यम् अनिन्द्यमासीत्। मयाऽनुभूतं यत् तस्या रूपे मोहिनीशक्तिरिव वर्तते चुम्बकवत् च महदाकर्षणं विराजते। मया स्वदृष्टिः सहसा नीचैः कृता। किन्तु वार्तालापकाले यदापि कदाचिद् दृष्टिरुपरि कृता तदा मयाऽनुभूतं यत् सा निरन्तरं माम् एव निर्निमेषाभ्यां नयनाभ्यां पिबन्तीव प्रतीयते ।

अहं परिवृत्य सहसा समुत्थितः, परन्तु एवं प्रतीयते स्म यत् तस्या दृष्टिर्मम पृष्ठे तीर इव प्रविशति । यदा चाऽप्यभिमुखो भूत्वा तां दृष्टवान् तदा पश्यामि यत् काचिद् विचित्रैव मुग्धा स्मितिस्तस्या वदने विराजते।

जीवनदत्तभ्राता तु आशुतोषशकर इव सरल आसीत्। भ्रातृजायायाः प्रगल्भतां स अनुभूतवान् न वा इति त्वहं न जानामि, किन्तु विवाहितपुरुषाणां हृदये एवंविधानां दृश्यानां या प्रतिक्रिया भवति सा तु तेषां मुखमण्डले न मया दृष्टा।

अग्रिमदिवसे तु भ्रातृजायाया व्यवहारेणाऽहम् अत्युद्विग्नः सञ्जातः। प्रातरेव मम कक्षे सा प्रविश्य मम स्कन्धयोरुच्चैः स्पर्शमाघातञ्च विधाय निद्राभङ्गं कृत्वा प्रोवाच-"अयि! देवरमहोदय! उत्तिष्ठ पश्य सूर्यः समुदेति, भवदीयं चायपेयं च शीतलतामभ्येति"। अहं उद्विग्नतां गतवान्। किन्तु सा स्मयमाना अग्रे ब्रवीति—"किं रात्रौ गाढनिद्रा न समागता? निद्राऽपि कथं तवाऽन्तिकमागच्छेत्? एतद् आयुस्तु नैवाऽसहायशयनस्य तव। मम विचारे तु शीघ्रं विवाहं विरचय ···" इत्याद्युक्त्वा सा विद्युदिव मम शयनकक्षात् निष्क्रान्ता।

अग्रिमदिवसे तु भ्राता श्रीजीवनदत्त प्रातरुत्थाय सन्ध्योपासनादिकं कृत्वा प्रसन्नमुद्रान्वितो मां निरूप्य स्वपत्नीमेवम् अब्रवीत् "अयं यश्छोटकू समागतस्ततस्त्वम् अधुना मम कार्यालयगमनाऽनन्तरं नैवात्मानम् एकाकिनीम् अनुभविष्यसि, न च तव मानसं व्याकुलीभविष्यति। अनेनैव सह वार्त्तालाप-करणेन इतस्ततः पर्यटनेन च समयो व्यत्येष्यति। कतिचिद् दिनानि त्वयं स्थास्यत्येव। वयं 'मुक्ता' नामधेयं निर्झरस्थलमपि कदाचिद् सहैव पर्यटितुं गमिष्यामः तत्रस्थं दृश्यमतीव मनोरमं भवति।"

पुनः द्विदिनाऽनन्तरम इयं घटना सञ्जाता। अहं भ्रातुर्जीवनदत्तस्य कार्यालयगमनाऽन्तरं प्रातर्दशवादनसमये प्राङ्गणे तैलमर्दने निमग्नोऽभूवम्। एतस्मिन्नेवाऽन्तरे भ्रातृजाया तत्र समागत्य ब्रवीति 'देवरमहोदय! किं व्यायामं करोषि? तव शरीरं तु सुघटितं प्रतिभाति!"

"एवम्, मल्लयुद्धमपि क्रियते मया' अहम् उक्तवान्।

"मल्लयुद्धम्, केन सह?" तस्याः स्वरे आश्चर्यम् आसीत्।

"मल्लशालायां स्वसखिभिः समम्"।

"तदा त्वत्रागत्य मन्ये कष्टमेव भवेत्। यतो हि नित्यं व्यायामं कुर्वाणा मल्ला अभ्यासविहीना सन्तः शरीरपीडामनुभवन्ति।"

"अत्र सायं यदा पर्यटनार्थं गच्छामि तदा तत्रैव कश्चित् व्यायामः क्रियते।"

"किन्त्वत्र मल्लयुद्धं तु न कर्तुं शक्यते। यतो हि त्वादृश सुघटित-शरीरः मल्लयुद्धप्रियश्चाऽस्मिन् लघूनि पार्वत्यप्रदेशस्थले न कश्चित् प्राप्यते।"

"न हि, न काऽपि तस्याऽऽवश्यकता" अहं सलज्जो भवन् तां विरम-यितुकामः प्रत्युवाच ।

किन्तु भ्रातृजाया समीपमागत्य मम पृष्ठे सहसा तैलमर्दनं प्रकुर्वाणा अब्रवीत् "पुरुषो भूत्वा कथम् एवं लज्जामावहसि ?"

अहं स्तब्ध इव सञ्जात । मनसि इयं कामना आविर्भूता यत् तस्मिन् दिन एव तस्मात् पार्वत्यप्रदेशात् स्वगृहं प्रत्यागच्छेयम् । शास्त्रेषु लिखित-मस्ति यत् ब्रह्मचारिणा स्त्रीसाहचर्यात् दूरत एव भाव्यम् । किन्तु सत्यमेतद् यत् तस्मिन् दिने भ्रातृजायाया कोमलकरतलस्पर्शसुखवशादेव नाहम् उत्थितोऽभवम् ।

जीवनदत्तभ्राता रेलपथस्याऽभियन्त्रणकार्यालये कार्यरत आसीत् । सायं स कार्यालयाद् आगत्य सूचितवान् यत् अग्रिमदिवसे ट्रालीयानस्य प्रबन्धः कृत । वयं सर्वे 'मुक्ता' नाम्नि निर्झरस्थले मनोरञ्जनार्थं चलि-ष्यामः ।

अग्रिमदिवसे च रेलट्रालीयानं समागतं किन्तु जीवनदत्तभ्रातृमहोदयो न समागतः । तेन प्रेषिता एका सूचनाचिटिका प्राप्ता यस्यामिदं लिखित-मासीद् यत्–किमप्यावश्यककार्यवशात् अहं नाऽऽगन्तुं शक्नोमि अत एव युवामेवभ्रमणार्थं तत्र गच्छतम् । अन्तत किञ्चिद् विचार्य भ्रातृजायया सह मयैव भ्रमणगमनं सम्पादनीयमभवत् ।

रेलपथस्य किञ्चिद् दूरस्थ एव मुक्तानामधेयो मनोरमः पर्वतीयो निर्झर आसीत् । आवां पदाती एव सहैव गतवन्तौ । तत्र गमनं वस्तुत सार्थकमभवत् । अत्यन्तं मनोरमं दृश्यमासीत् तत्रत्यम् । यदि तत्प्रदेशे गत्वाऽपि तत्सर्वं नाऽवलोकयिष्यं तदा पश्चात्तापमेवाऽन्वभविष्यम् । विंशति-मीटरत उपरिष्टात् निष्पतन्ती धवलजलधारा यस्या बिन्दुमौक्तिका आकाशे उड्डीयमानाः सूर्यमरीचिसम्पर्कप्रभावेण विचित्रमेवाऽन्धकारं जनयन्त इन्द्रधनुः उत्पादयन्ति स्म । तत्सर्वं विलोक्य चेदमेव प्रतीयन स्म यत् कस्मिंश्चित् अन्यस्मिन्नेव लोके समायात ।

अस्तु, तदानीमेव एको भारवाहकः सेवकः (कुली) अस्माकं भोजन वस्तूनि पानीयं च नीत्वा समायात, उक्तवांश्च –'श्रीमन्तः ! अत्रैव नाऽतिदूरे गत्वा तिष्ठामि । भवन्तः स्नानादिकं कृत्वा भोजनं गृह्णन्तु ।"

भ्रातृजाया स्वकीयं मदीयं च वस्त्रादिकं सहैव समानीतवती आसीत्। मया उक्तम् "नाऽहं स्नास्यामि. स्वास्थ्यं किञ्चित् समीचीनं न प्रतिभाति।" वस्तुतस्त्वहं भ्रातृजायाया समक्षं स्नानं कर्त्तुं नैवाऽभिलषामि स्म।

भ्रातृजाया मन्दस्मितिपुरःसरम् अवादीत्—"अहन्तु स्नानं करिष्याम्येव। निर्झरस्नानमखानुभूतिस्तु काचिदन्यैवाऽनिर्वचनीया भवति। एवंविधस्त्ववसरो यदा कदाचिदेवोपलभ्यते।"

भारवहकः स किङ्करस्ततो गतवान्।

अहमपि किञ्चिद् दूरे गत्वा समीपस्थायाम् एकस्यां शिलायामुपविष्टवान्।

भ्रातृजाया स्नानं कर्तुं प्रारब्धवती। सा तथा निश्चिन्तमनसा निःसंकोचेन च स्नानं कृतवती यदहं तद् वर्णयितुम् अक्षमः। पर्याप्तं कालं तु मम दृष्टिरन्यत्रैवाऽभवत्, किन्तु यदा सहसैवैकदा मया तस्यां दृष्टिन्यासः कृतस्तदा सा जलधारासु क्लिन्नवसना स्नानसुखसञ्चये निरताऽदृश्यत। तस्याः क्लिन्नानि वसनानि शरीरे संश्लिष्टानि सन्ति पारदर्शिरूपेण वस्त्रहीनतामेव प्रकटयन्ति स्म। मया तत्सर्वं निरीक्ष्य निर्णीतं यद् गृहे प्रत्यागते प्रथमट्रेनयानेनैव प्रस्थितो भविष्यामि।

परन्तु एवं कर्तुं नाऽशकम्। श्रीजीवनदत्तभ्राता माम् अवादीत् — "अद्य रात्रौ अत्रत्यः कश्चित् लोकनृत्यात्मको यात्रोत्सव आयोजितो वर्तते। तत्सर्वं विलोक्य गमने का हानि ?"

रात्रौ यात्रोत्सवं दृष्टवान्. किन्तु मनस्तु मम कथमपि न रमते स्म। अत एव निद्रापरवशो भूत्वा सदच एव गृहम्प्रत्यागत्य सुप्तवान्।

अर्धरात्रौ अकस्मादेव 'खट्' शब्दमाकर्ण्य मम तन्द्रा भग्ना। मनसि शका समागता यत् कश्चित् शनैः शनैः द्वारमुद्घाटच प्रविष्टो भवति। अहं तस्मिन् गाढान्धकारे चक्षूंषि विस्फार्य द्रष्टुं प्रयते। परन्तु कश्चित् दृष्टिपथं नाऽऽगतस्तस्मात् पुनः चक्षूंषि निमील्य शयनार्थम् उद्यत। परम् अग्रिमे एव क्षणे मम हस्ताञ्जलिं शनैः शनैः कश्चिद् ग्रहीतुं प्रारब्धवान् उष्णकरतलस्पर्शः।

अहं स्तब्धः सन् पृष्टवान्—'कोऽयम्' इति ? परन्तु किमप्युत्तरं नाऽधिगतवान् ।

पुनरहं कश्चिद् भीत इव पर्यङ्के समुत्थाय तस्मिन्नन्धकारयुक्ते कक्षे निरूपयन्निव दृष्टवान् यद् भ्रातृजाया मम पार्श्वे पर्यङ्के एव समुपविष्टा वर्त्तते। तदानीमहं हतप्रभमात्मानं कथमपि संयम्य निःशब्दो विचित्राऽनुभवसम्पन्नः सन् किमपि कल्पयितुं विचारयितुं वक्तुं कर्तुं च न प्राभवम्। मस्तिष्के झङ्कृतमिव सञ्जातम्। हृद्गतिः सहसा तथाविधमवर्धत यत् तस्य स्पन्दनमपि सेतुपथे गतिं कुर्वतो ट्रेनयानस्येव धड़धड़ायमानमश्रूयत। स्वकीयश्वासा अपि झञ्झावात-सदृशाः प्रतीयन्ते स्म। तस्मिन् क्षणे त्वहं सहसैव कातरता-हृष्टता-प्रहृष्टता-समुद्विग्नता-भीतता-किंकर्तव्यविमूढतादि-नानाभावैरेकस्मिन्नेव काले संग्रस्तोऽभूवम्।

मम मनोविज्ञानम् अन्यमनस्कताम् असहजतां च निरूप्य किमपि विचारयन्तीव भ्रातृजाया सहसा मम हस्तौ गाढं निपीडय झटित्येव तस्मात् कक्षात् बहिरगमत्। तदनन्तरं तु मम पुनः शयनस्य प्रश्न एव नाऽऽसीत्। यथा कथञ्चिदहं तां रात्रिं गमयित्वा ब्राह्ममुहूर्त्ते एव समुत्थाय दैनिकं नित्यकृत्यं च निष्पाद्य प्रातः किमप्यभुञ्जान एव तस्मात् पार्वत्यप्रदेशात् प्रथमबसयानेन षड्वादनात् पूर्वमेव स्वगृहं प्रति प्रस्थितवान्।

ततः प्रत्यावर्त्तितेऽपि स्वकीये गृहेऽहं भृशं चिन्तामग्नः सञ्जातः। बहुदिनं यावत्तु मम मानसमशान्तमेवाऽभवत्। प्रतीयते स्म यत् यथा स उष्णकरतलस्पर्शो मम हस्ते संश्लिष्ट इव वर्त्तते। मम संयमबन्धस्तं स्पर्शं स्मारं स्मारं विगलित इव भवितुं प्रारभत।

मम दृष्टिकोणे शनैः शनैः परिवर्त्तनं समागतम्। किमिदं ममाऽऽयुः साम्प्रतं गीतापठनस्य योगदर्शनाध्ययनस्य वा ? राजसिकं जीवनं विना अध्यात्मस्यापि वास्तविकं स्वरूपं न ज्ञायते। भोगं विना तु त्यागस्य स्थितिरप्यकल्पनीया। येन कदाचिद् पिपासा न शमिता स शीतलजलस्य महत्त्वं कथं ज्ञास्यति ?

ततस्तु पुनरहं शृङ्गारशतकं गृहीतवान्। मेघदूतम् अधीतवान्। गीतगोविन्दं गीतवान्। मनसि चायं विचारः समागतो यत् कथमहं शाद्वलं विहाय मरुस्थलम् अनुधावामि ? भ्रातृजायायाः सान्निध्यतिरस्कारजन्यपश्चात्तापभावोऽपि नितरां प्रावर्धत। नाऽहं शुकदेवो न चाऽपि प्रस्तरप्रतिमा भवामि। पुनः कथं नाऽहम् उर्वशीनिवेदनम् अभिनन्दितवान् ? एवविधः

सुवर्णावसरस्तु नोपलभ्यते वारंवारम्। एकदा कथमपि संयोगात् प्राप्तः सोऽपि मूर्खतावशाद् हापितः।

तदनन्तरमहं कविताः कर्त्तुम्प्रारब्धवान्। अनुरागपूर्णा व्याकुलीभावभूताः प्रगाढप्रेमपरिचयप्रदा अन्तर्हृदयरससिक्ताः कविताः। काश्चित् कविताः पत्रिकासु मुद्रिता अपि। तामु काश्चित् कविताः भ्रातृजायायाः सकाशम् इति विचार्य प्रेषिता यत् सा ताः कविता अधिगम्य मह्यं किमपि पत्रं प्रेषयिष्यति, तत्र प्रतिक्रिया व प्राप्स्यते। परन्तु नैराश्यमेव समधिगतं मया। पुनरपि तस्याः स करतलस्पर्श उष्णाद् उष्णतर एव जायमानः प्रावर्धत मम मानसे।

एतस्मिन्नेवाऽन्तरेऽहम् अन्यभाषाणामपि कथासाहित्यमधीतवान्। प्रतीयते स्म यत् जीवनस्य सत्यं स्वरूपं त व वर्तते यदहं मिथ्यां कल्पयामि स्म। प्रतियुगं छलनापरा प्रवञ्चनामयी नारी स्वाकाङ्क्षितम् अनुरूपं पुरुषं प्रार्थयते, आह्वयते, कामयते च। प्रतियुगं नारीकामनायाः समक्षं पुरुषः पराजित एव भवति। अयमेव शाश्वतो नियमः, अहं तस्याऽपवादः कथं समभवम् ? किमहं महर्षिविश्वामित्रादप्यधिकस्तापसः ? अहं पश्चात्तापानले विदग्ध इवाऽन्वभवम्। अहो ! कथम् एवं विधः सुवर्णावसरो हापितो मया ?।

अस्तु, वर्षद्वयाऽनन्तरं पुनस्तादृशः शुभावसरो मया समधिगतः। भ्राता श्रीजीवनदत्तस्तदानीं जमालपुरे नियक्त आसीत्। स एव माम् आहूतवान्। नवघण्टापर्यन्तं बसयात्रां विधाय तत्र च सायंसमये तेषां गृहम् अहं प्राप्तवान्। भ्रातृजाया मां विलोक्य मन्दं मन्दं स्मितवदना सञ्जाता।

माम् आगतं विलोक्य श्रीजीवनदत्तभ्राता एवम् अब्रवीत्— मम विचारस्त्वयम् आसीत् यत्त्वं प्रातःकाले समागमिष्यसि, किन्तु अद्यैव समागत इति तु वरंवरम्। अहम् अधुनैव प्रतिष्ठे। रेलपथे काचिद् विकृतिरागता वर्तते, अतो मया सत्वरमेव तत्र गन्तव्यमस्ति। 'अनिता' (मम भ्रातृजाया) रात्रावत्र एकाकिनी भवेत् इति विचार्य त्वम् आहूतो मया। अद्य तु रात्रौ अत्र एकस्य भारवाहकस्य (कुली) नियुक्तिं कृत्वा गमनस्य विचार आसीत्, किन्तु त्वम् आगत एव। अतस्तस्याऽधुना काप्यावश्यकतैव साम्प्रतं न भविष्यति।"

किञ्चित्कालान्तरं स स्वकीयकर्त्तव्यसम्पादनार्थं प्रायः सप्ताहपर्यन्ताय प्रस्थितः।

रात्रौ भोजनाऽनन्तरं भ्रातृजाया समाचारादिकं पृष्ट्वा किञ्चिद् वार्त्तां विधाय विष्टरं कृत्वा चाऽब्रवीत् यत् मन्ये यात्रापरिश्रान्तोऽसि, आरामं चिकीर्षसि, अत एव अत्रैवारामं कुरुष्व ।

अहम् उक्तवान्—"अधुना तु निद्रैव नायाति । भवती अपि अत्रैव मम सविधे तिष्ठतु । वार्त्तालापं करिष्यावहे ।"

परन्तु सा पर्यङ्कात् किञ्चिद् दूरे कुर्सीमाकृष्य तत्रैव समुपविष्टवती ।

अहम् उक्तवान्—"मया पत्रिकासु मुद्रिताः काश्चित् कविता भवत्सविधे प्रेषिता आसन् । ताः पत्रिका भवत्या समधिगता न वा ?" ।

"पत्रिकास्ताः मिलिता आसन् ।"

"भवत्या पठिताः ? कीदृश्यस्ताः कविताः ?"

"पठितास्तु, किं तु त्वया यां मनसि कृत्वा ता लिखिताः सा तु गतवती ?"

"गतवती ? किं तात्पर्यम् !"

"एवं, मृतवती सा ।"

अहम् एतद्वाक्यमाकर्ण्य निर्निमेषाभ्यां नेत्राभ्यां ताम् पूर्ववत् अपश्यम् । भ्रातृजाया ज्ञातवती यदहं तस्यास्तात्पर्यं नाऽवेदिषम्, अत एव साऽग्रे एवम् अब्रवीत्

"शृणु, तव भ्राता अयस्कान्तमणिरिव (पारस पत्थर) वर्तते । तेन सह कोऽपि कदा पर्यन्तं लौहरूपेण निवत्स्यति ? तेन तु कनकेन भाव्यम् एव । मयाऽपि समम् एतदेव संवृत्तम् । त्वया तु दृष्टमेव यत् स कथम् माम् एकाकिनीं विहाय अत्र एकस्य भारवाहकस्य किङ्करस्य मम सुरक्षार्थं नियुक्तिं कृत्वा विश्वस्तमना भूत्वा स्वकार्ये गच्छति स्म । मम मनोवृत्तिः साम्प्रतं तथा न वर्त्तते प्रत्युत पूर्णतया परिवर्तिता सञ्जाता । मम पत्युर्विश्वासेन मम मानसं जितम् । एनं विश्वासं हन्तुम् अधुना कस्याः शक्तिर्वर्त्तते ? अस्तु अहं विद्युद्व्यजनं चालयामि···केषुचिदेव क्षणेषु निद्रा समागमिष्यति·· त्वं शयनस्य प्रयत्नं कुरुष्व " इत्युक्त्वा विद्युद्व्यजनं चालयित्वा सा कक्षस्य कपाटं पिधाय प्रस्थितवती ।

अहं किंकर्त्तव्यविमूढस्तत्र तथैव मूर्त्तिमान् इव तूष्णीमतिष्ठम् । मम सर्वे मनोरथाः प्रभग्नाः सर्वाः कल्पना अकाले काल कवलीभूताः… तत्रा-गमनस्य सर्वः समुत्साहो मन्दीभूतः स्वप्नलोको जागरणावस्थामधिगतः… मन्ये भ्रातृजायया पतनोन्मुखमार्गात मम समुद्धारः कृतः । साम्प्रतम् आत्मनो विचारमनुचिन्त्य महतीं लज्जामनुभवामि । सम्भवतः सीतयैव रावणः प्रतिहतः ।

कक्षे केवलं विद्युद्व्यजनस्य सरसरायमाणो ध्वनिः प्रवर्धतेतमाम् ।।

• •

# अन्तर्द्वन्द्वः

रात्रौ द्विवादनसूचकं घण्टानादमाकर्ण्य शुभा सहसा स्तब्धा सञ्जाता। "अहो ! एतावती रात्रिर्व्यतीता परन्तु तस्या नेत्रेषु निद्रा कथं न समायाति ? तस्याः मनसि किं सञ्जातम् ? सर्वं तु पूर्ववदेव वर्त्तते किन्तु कथमेष द्वन्द्वः ? कथमेषा व्यथा ? कथमियम् उद्विग्नता ?"।

सा परावृत्य स्वदृष्टिम् अन्यत्राऽपि कृतवती। तस्याः पतिः सुधीरः पुत्रो हरीशः पुत्री सुधा च गाढ़निद्रया शयानाः दृश्यन्ते। बहिर्विद्यमानानां भृत्यानामपि खर्राटाध्वनयः शान्तिभङ्गं कुर्वाणाः श्रूयन्ते। केवलं सैव जागर्त्ति। अन्ततः सा कथमिमां दीर्घां निशां यापयेत् ?।

सा किं कुर्यात् ? क्व गच्छेत् ? तस्या एकोऽपि पादप्रक्षेपस्तस्याः समस्तं व्यवस्थितं जीवनं छिन्नं भिन्नं च कर्त्तुं प्रभवति। कदाचित् सा विचारयति यत् सा स्वपतिं सुधीरं जागरयित्वा स्पष्टतया सर्वम् आत्मनिवेदनं कथयेत्। परन्तु तत्सर्वं किं सुधीरो धैर्यपूर्वकं श्रोतुं शक्नोति ? सोढुं शक्ष्यति ?। कदापि नैव।

तस्या विवाहस्य पञ्चदशोऽयं वर्षः । सर्वं सामान्यतया चलति स्म शनैः शनैः व्यवस्थितरीत्या च प्रवर्त्तते स्म । पुनरयं कथम् असामान्यमिव संवृत्तम् ? शुभा बहुवारं विचारयामास यत कथमेतत् सर्वं सञ्जातम् ? कुतः सा समुद्विग्ना सञ्छिन्ना च भवति स्म ? कुत्र न्यूनता समागता तस्या जीवने यत् सा स्वकीयेऽस्मिन् जीवने शून्यमिव खण्डितमिव भ्रष्टमिव रिक्तमिव चाऽनुभवति ? सा बहुवारं स्वकीयेऽतीतकाले दृष्टिक्षेपं कृतवती येन सा जानीयात् यत् कुतस्तस्या वैवाहिकं जीवनं विगत-पञ्चदशवर्षेभ्यः अपूर्णमिव प्रतीयते ? ।

बाल्यकालस्य प्रतिभासम्पन्ना शुभा, परिवारस्य स्निग्धतमा शुभा, रूपवती शुभा, धनसम्पन्नस्य पत्युः प्रियतमा शुभा, सन्तानद्वयस्य च जननी शुभा, कथमात्मनि लालसां प्रेमोद्विग्नतां विचित्रतां चाऽनुभवति ? ।

हिमांशुः कथं छायामिव तस्याऽनुगमनमिव करोति ? कथम् आश्लिष्यन्निव ताम् प्रतीयते ? एष हिमांशुनामधेयः पुरुषस्तस्याः जीवनस्य तस्मिन् क्षणे सहसा प्रविष्टवान् यदा सर्वं व्यवस्थितमिव चलति स्म । सा तु निजमतीतकालं प्रायः विस्मृतवती एवाऽऽसीत् किन्तु तत्सर्वं पुनः अकस्मादेव हिमांशुः प्रत्यावर्त्तयत् ।

हिमांशुना सह तस्याः परिचयः एकस्मिन् सहभोजोत्सवे समपद्यत । तस्याः पतिः सुधीर एव तस्य परिचयं कारयमाणः प्रोवाच—"शुभे ! एनं सम्मिलतु, एष एव डाक्टर हिमांशुः वर्त्तते । चिकित्सकः साहित्यकारश्च ।"

"अरे ! चिकित्सकता साहित्यकारिता च ? कथम् एतयोः सामञ्जस्यम् ?" शुभा विहसन्तीव तां पृष्टवती ।

"इदमेव तत्त्वं माम् अन्येभ्यः पृथक्करोति ।" हिमांशुः निश्छलहासं कुर्वाणोऽग्रे प्रोवाच "यथा भवती अपि माम् पृथगिव प्रतिभाति अन्याभिः ।"

"कथमहम् अन्याभिः पृथक् ? न त्वहं साहित्यकर्त्री न वा चिकित्सिका ? अहं तु सामान्या नारी वर्त्ते ।"

"शुभा जी ! भवत्याः विचारोऽसमीचीनः, न भवती सामान्या महिला । अहन्तु भवत्याम् अनितरसामान्यतां विलोकयामि । भवती स्वात्मनि विद्यमानां विशेषतां निरूपयत्येव नहि, या मयाऽवलोकिता भवत्याम् ।"

"अस्तु, नाऽहम् आत्मानं साधारणं मन्ये, तर्हि भवान् मां किं कथयिष्यति ?"

"एवमेतत्, अहन्तु भवतीं स्वकीयकथानकानां नायिकां रचयिष्यामि । अहन्तु वर्षेभ्यो भवतीमेवाऽन्वेषयामि स्म । भवादृशी नारी कथं खलु विगतेष्वेतेषु संवत्सरेषु न मम चक्षुषोः पुरस्तात् समागता ?" हिमांशुः प्रत्युवाच ।

शुभा तत्सर्वमाकर्णयन्ती एकाकिनी अवाक् स्थिता बभूव । तस्याः पतिस्तु तस्मिन् सहभोजोत्सवे अन्यैः सुहृद्भिः परिचितैश्च सह वार्त्तामग्न आसीत् । सा विचारयामास "एतावत् साहसं निर्भीकता, वाक्पटुता, असंकीर्णता, स्पष्टता च कस्यचिदन्यस्य पुरुषस्य व्यवहारे इतः पूर्वं तया नाऽवलोकितम् आसीत् । पुनरपि तत्सर्वं तस्यै अरुचिकरम् असहजं च न प्रतीयते स्म ।

तदनन्तरं तु हिमांशुना सह तस्याः वार्त्तालापप्रवाहो अनिरुद्ध एव प्रावर्त्तत । सा स्मरणीया सायंवेला तस्याः जीवनस्य स्मृतिशिलेव सञ्जाता । हिमांशोर्नीलाभे नेत्रे, तस्य वाक्चातुर्यम्, तस्य व्यवहारस्य स्निग्धता, निर्भीकता च शुभाया मनांसि मुहुर्मुहुर्व्यामोहयन् । तस्य व्यक्तित्वे विचित्रमिव सम्मोहनमासीत् येन निबद्धेव शुभा तम् अतिपरिचितं जन्मान्तरस्निग्धं सखायमिवाऽनुध्याय तत्रैव चिन्तानिमग्ना सञ्जाता । तेन सह तस्यास्तत् प्रथमं सम्मिलनम् असमाप्तवार्त्तालापजनितम् अत्यानन्ददायकम् अनिर्वचनीयमिवाऽभवत् ।

शनैः शनैः हिमांशुस्तस्या गृहेऽपि यदा कदा समागत्य स्वकीयेन वार्त्तालापेन ताम् आनन्दयितुम् आरब्धवान् । तेन सह वार्त्तालापं विधाय शुभायाः स्वान्तं षोडशीकमिव समवर्त्तत । जीवनचक्रं पञ्चदशवर्षपूर्वमिव सञ्चलितम् । आयुषस्तस्मिन् समये यदा किल प्रौढा युवतय एकरसं जीवनं यापयन्ति, तदानीं कथमेतत् परिवर्त्तनं तस्या जीवने हिमांशुकारणात् समागतमिति विलोक्य शुभा स्वयं कदाचित् चिन्तामग्नाऽपि प्रवर्त्तते स्म ।

अस्तु, तदनन्तरं तु स हिमांशुः प्रायः प्रत्यहमेव तस्या गृहे आगमनमारब्धवान् । कदाचित् तस्याः पत्युः सुधीरस्य समुपस्थितौ, कदाचिच्च तस्याऽनुपस्थितावपि । शुभाया अपि मानसं कदाचित्तस्याऽनागने रिक्तमिव प्रतीक्षारतमिव च समवर्त्तत । हिमांशोः सान्निध्यं शुभायै तां मानसिकीं

शान्तिं परपूर्णतां च प्रददाति स्म यां सा स्वकीयपत्युः सुधीरस्य समालिङ्गनेऽपि न प्राप्नोति स्म ।

कदाचित् विचारयति स्म यत् 'नारी पत्युः सत्तायामपि कथमात्मानं कदाचिद् अतृप्ताम् अनुभवति, इत्येतत् तु तया साम्प्रतमेव हिमांशोः सन्निध्येन ज्ञातम् । किं विवाहः केवलं देहस्य सम्बन्धमात्रमेव ? यदि एतेन विवाहेन मानसिकी शान्तिः परितृप्तिश्च नाऽधिगम्येत तदा किम् अयम् अपूर्णो न वर्त्तते ? - परन्तु सर्वमेतत् चिन्तनपरं तत्त्वं तया हिमांशोरागमनाऽनन्तरमेव कथम् उररीकृतम् ? ।

हिमांशुस्तस्या जीवनस्य कालातीतानि पत्राणि परावर्त्तितवान् । तत्र विद्यमानां धूलिं प्रोञ्छितवान् । तस्या जडसंस्कारे चिन्तने च कुठाराघातं कृतवान् ।

हिमांशुस्ताम अशिक्षयत् यत किमपि कर्त्तुम, किमपि लब्धुं, च आयुषः कोऽपि प्रतिबन्धो न भवति । स शुभाया व्यक्तित्वं परिमार्ज्य सदन्वेषणं च विधाय तेन सह तस्याः परिचयमकारयत् । शुभा बाल्यकालादेव प्रतिभासम्पन्ना बभूव । नृत्यं गीतं च तस्याः प्रतिभायाः स्वाभाविकम् अङ्गं वर्त्तेते स्म । तया नृत्यस्य उच्चशिक्षाऽपि गृहीता आसीत् । किन्तु विवाहाऽनन्तरं सर्वं प्रायः शनैः शनैः समाप्तमिवाऽभवत् । तस्याः पतिः सुधीरो व्यापारकार्ये नितरां निमग्न आसीत् । तस्य रुचिर्नृत्ये गायने च किञ्चिदपि नैवाऽभवत् । शुभया तु केवलं बालकाः, परिवारः, कलत्रम् इत्यादिशब्दानाम् अर्थावगमेष्वेव तेन सह जीवनस्य महत्त्वपूर्णाः संवत्सरा यापिताः ।

सा किं वर्त्तते ? तस्या व्यक्तित्वस्याऽपि परिचयोऽत्यावश्यक–इति तु तया कदाचिद् विचारितमपि नैव । सा सदैव 'श्रीमती सुधीर' इति नामधेयेनैव सर्वत्र विज्ञाता बभूव । किं केवलम् इयमेव तस्याः परिचयचिह्नम् ? इत्येवमादयः प्रश्नास्तस्या मानसं मथ्नन्ति स्म ।

पुनरपि आत्मानं परिचाययितुं तथा सरलं कार्यं नाऽस्ति । सम्बन्धानां भित्तिकाः अकस्मात् कम्पन्त इव । सर्वत्र सदैव प्रतीयते यत् तया क्वचित् परिस्थितिभिः समं सामञ्जस्यं कृतम् । परिस्थितय स्वानुकूला न कृताः प्रत्युत सा आत्मानमेव परिस्थितीनाम् अनुकूलताम् प्रापयत् इति सर्वं विचारयन्त्येव सा पुनरात्मानं पूर्वरूपे द्रष्टुं प्रारब्धवती ।

एकदा तस्याः पतिः सुधीरो यदा गृहे समागतस्तदा स दृष्टवान् यत्

तत्र तस्याः कक्षे नूपुराः, तबला-मृदङ्गादिवाद्ययन्त्राणि च इतस्ततः प्रथितानि वर्त्तन्ते। स पृष्टवान्—"किमिदं सर्वम् ? किमद्य कक्षस्य परिमार्जनं क्रियते ?'।

"न हि, अहमद्य नृत्याभ्यासं कृतवती।" शुभा संयतेन स्वरेण प्रत्युवाच।

"तव मस्तिष्कस्तु समीचीनः ? किं स्वकीयम् आयुः पश्यसि ? साम्प्रतमेतत् सर्वं तुभ्यं न शोभते। जना अपि किं कथयिष्यन्ति यत् सुधीरस्य पत्नी नृत्यति ?' इत्युक्त्वा सुधीरः प्रोच्चैरुपहसितवान्।

तत्सर्वम् आकर्णयन्ती शुभा इदमनुभूतवती यत् कश्चित् तस्या कर्णविवरे तप्तसीसकमिव। प्रवेशयति। काञ्चिद् उद्विग्नतामावहन्ती सा किमप्युत्तरम् अजानन्ती अकस्मादेव प्रत्युक्तवती—"एवमेवाऽद्य स्वकीया-स्तान् विस्मृतान् दिवसान् स्मृतिपथमानीय कश्चित् नृत्याभ्यासः समासा-दितः। सर्वाणि वाद्ययन्त्राणि धूलिसाद् भवन्ति स्म इति तेषा स्वच्छताऽपि समीचीना प्रतीयते स्म......' किञ्चिद् विरम्य पुनरब्रवीत् किं तुभ्यं मम नृत्याभ्यासो न रोचते ? अहं गृहे विद्यमाना प्रायः व्याकुलीभवामि। यदा यूयं सर्वे गृहात् स्वकीयं काय प्रति निर्गच्छथ तदा त्वहं नितराम् एका-कित्वम् अनुभवामि·· सुधीर !। अहम् अत्यन्तं द्वैविध्ये तिष्ठामि अहम् किमप्याश्रयम् अपेक्षे···अहं 'शुभा भवितुमिच्छामि·· केवलं 'शुभा' इति।···अहं त्वां रुष्टं विधाय यद्येतत् सर्वं करिष्यामि तदा सभवतः खंडिता भविष्यामि। परन्त्वहं पुनः पृष्ठतः प्रत्यावर्त्तितुं नैव समर्था·· मम निर्णयो माम् आत्मानमेव बद्धं कर्त्तुं न प्रभवति·· पुनश्च यदि त्वं मम सर्वमेतत् कृत्यं परिहासत्वेन मानयिष्यसि तदा त्वहं त्वत्तो दूरगमनेऽपि विवशा भविष्यामि···।' इत्यादि सा निरन्तरम् आनयासमेव न जाने कथम् उच्चार-यन्ती निजभावनां सुधीरस्य समक्षं प्राकटयत्।

सुधीरस्तु हतप्रभः सन् तां विलोकयन् विचारितवान् यत् अद्य शुभाया मनसि किमभवत् ? एवं तु सा पूर्वं कदापि नैव दृष्टा । अस्तु, शनैः शनैश्च तस्यां बहूनि परिवर्त्तनानि क्रमशः सञ्जातानि। एतेषु सर्वेषु परिवर्तनेषु क्वचिद् हिमांशोः सत्प्रेरणा, प्रोत्साहनञ्च सुतरामवर्त्तत। सुधीरोऽपि शुभाया बहूनि कृत्यानि मनोरथानि च स्वीकर्त्तुं समुद्यतोऽभवत्।

हिमांशुस्तु शुभायाः कृते काचिद् अज्ञातप्रहेलिका इव अभवत्। यावतीं सा तस्य निकटतां भजते स्म तावानेव तम्प्रति तस्येप्साभावोऽपि

प्रवर्धते स्म । यदा च कञ्चित् प्रति कस्यचित् सान्निध्यम् ईप्सा वर्धते तदा सांसारिकदृष्ट्या सामाजिकदृष्ट्या च तेन सह सम्बन्धनिर्धारणमपि आवश्यकं भवति ।

परन्तु हिमांशुना समं तस्य कः सम्बन्ध इति तु सा स्वयमपि न जानाति । सा इदमेव विचार्य समुद्विग्ना भवति यत् तेन सहाऽस्य सम्बन्धस्य किं नामधेयं प्रकुर्यात् ? यः सम्बन्धः श्रद्धया सिञ्चितः, हृदयेन सम्बद्धः स समस्तैश्च सांसारिकैः सम्बन्धैः पर इव बभूव । असत्यसम्बन्धानां भित्तयो नारीभ्यः सुरक्षां ददति किन्तु आत्मतुष्टिं तृप्तिं च प्रदातुं न समीहन्ते ।

शुभा निरन्तरं नृत्याभ्यासं कुर्वन्ती आसीत् । केषुचिद् दिनेष्वेव हिमांशुस्तस्य प्रशिक्षणाऽभ्यासार्थं तन्नगरस्य प्रसिद्धं नर्त्तकमानीतवान् । स नर्त्तकोपि तस्याः कलायाः प्रशंसां कृत्वा नृत्याय प्रेरितवान् । तस्मादेव तस्याः प्रतिभायाः पर्याप्तं विकासः समभवत् ।

नृत्यप्रवीणायाः शुभाया देहयष्टिर्यदा नृत्यकार्ये कम्पमाना तरंगायिता समजायत तदा तस्याः सप्तवर्षीया पुत्री सुधा तां निर्निमेषाभ्यां नयनाभ्यां पश्यति स्म । सा एकस्मिन् दिवसे मातुः कण्ठे हस्ताभ्यां मण्डलं विधाय प्रोक्तवती –"मातः ! अहमपि भवादृशी इव नृत्यं चिकीर्षामि"—तदाकर्ण्य शुभा तथा धन्या भूत्वा कृतकृत्यतां चाऽधिगतवती यथा सा आत्मानमेव प्राप्तवती ।

तस्य नृत्यशास्त्रप्रवीणस्य गुरोः बहुत्र नगरेषु पर्याप्तः प्रभावः समादरश्च बभूव । तत्प्रेरणयैव शुभायाः एकं नृत्यप्रदर्शनं नगरे समायोजितम् । तस्मिन् प्रथमप्रदशन-कार्यक्रमे तस्य पतिः सुधीरः अत्यन्तम् अन्यमनस्कतयैव गन्तुं सन्नद्धः सञ्जातः । तदनन्तरं तु शुभाया अनेकानि नृत्यप्रदर्शनानि नाना-नगरेषु जातानि । जनैस्तस्या नृत्यकलायाः पर्याप्तं प्रशंसा कृता । विगतनृत्य-प्रदर्शन-कार्यक्रमं सम्पाद्य यदा शुभा अमरीकातो भारतं प्रत्यागता तदा सुधीरस्तस्याः स्वागते कुसुमस्तबकं नीत्वा स्वयमेव वायुपत्तने प्रतीक्षारतः समतिष्ठत ।

प्रथमवारं शुभया समनुभूतं यत् यस्याः प्रतीक्षा सा करोति स्म सा तृप्तिः सुधीरद्वारा प्रदत्तोभ्यः कुसुमुभ्यो निःसृत्य तस्याः समीपे समायाति ।

परन्तु यदा कश्चित् प्रसिद्धिशिखरे समारोहति तदा काठिन्यान्यपि तस्य पुरतोऽनुधावन्ति । तस्या गृहे प्रायः संवाददातारः पत्रकाराश्च समा-

यान्ति स्म । एकदा प्रसंगवशात् स एकस्मिन् साक्षात्कारे श्रीहिमांशुमहोदयं यदा स्वकीयप्रेरणायाः स्रोतोरूपेण स्वीकृत्य तस्य प्रशंसनं कृतज्ञतां चाऽभिव्यक्तवती तदा तु भूकम्प इव सञ्जातः ।

प्रायः सर्वेषां ध्यानं शुभाया हिमांशोश्च मध्ये विकासमधिगच्छतः सम्बन्धस्योपरि निपपात । सुधीरस्तु तत्र किमपि वक्तुं न प्राभवत् किन्तु मौनम् एतस्य साक्षिरूपेण भवति स्म यत् 'स तत्सर्वं सोढुं न प्रभवति ।'

हिमांशुस्तु एकाकी निवसति स्म । स च समस्तम् उत्तरदायित्वं स्वयमेव सोढुं समर्थ आसीत् । तस्य शुभां प्रति स्नेहः प्रेम च केवलं तस्या आकर्षणक्षमायां देहयष्टिकायामेव नाऽभवत् । परन्तु स तु तस्याः सुन्दर-देहयष्टिकायां विद्यमानं कलास्वरूपम् अपश्यत् । स तस्याः शरीरे नार्या अस्मितां, तत्र विद्यमानां कलाऽभिमानितां, जिजीविषां, स्वरूपोद्धारभावनां, स्वात्माभिमानितां च प्रतिबिम्बरूपेण प्रादर्शयत् ।

तथाविधस्य हिमांशोः परित्यागोऽपि शुभायाः कृते सम्भवो नाऽभूत्, यतो हि स तु तस्याः स्नेहधारायाः प्रेमपीयूषस्य च प्रेरणास्रोत एव वर्त्तते स्म । तस्या नीरसं जीवनम् उन्नमय्य प्रोन्नतिशिखरे संस्थापकः स एव प्रतीकरूप आसीत् । स तस्या अतीतकालस्य सूक्ष्मः स्वर्णकण आसीत् यः कुत्रचित् प्रच्छन्नो भूत्वा पुनः दृष्टिपथमायातः । तस्या जीवनचित्रं नाना-विधैः रङ्गैः हिमांशुरेव पूरयित्वा सौन्दर्ययुक्तं कृतवान् । किं सा तथाविधस्य हिमांशोः पृथग्भावं वियोगं वा सोढुं क्षमते ? ।

परन्तु इदं द्वैविध्यपूर्णं जीवनमपि च जीवितुं कठिनमासीत् । सुधीर-स्य परिवर्त्तितो व्यवहारः, बालकानां स्तब्धानि मुखमण्डलानि, समाजस्य च वेधनपराणि नयनानि शुभाया दैनन्दिनं जीवनं समुद्वेजयन्ति स्म ।

सा पतिम् अपत्यानि च कथं परित्यक्तुं समीहेत ? हिमांशोः सान्निध्ये नवजीवनस्य प्रारम्भकल्पनाऽपि तत्कृतेऽत्यद्भुता विचित्रा सहजा च प्रतीयते स्म ।

सा सर्वदा प्रबले मानसिकेऽन्तर्द्वन्द्वे निपतिता सती जीवनं जीवति स्म । तया स्वकीयं नृत्यसंस्थानमपि समारब्धमासीत् । नामधेयं, यशो वित्तं च तस्याश्चरणौ चुम्बन्ति स्म । परन्तु सर्वमपि समासाद्य काचित् रिक्तता व्यग्रता च ताम् अहर्निशं परिवेष्टयति स्म ।

एकदा यदा हिमांशुस्तस्या गृहे समागतस्तदा सा आत्मानं निरोद्धुं न प्राभवत्। सा स्वकीयान्तर्हृदये विद्यमाने आवेगप्रवाहे स्वयमपि प्रवहन्तीव स्वमूर्धानं हिमांशोः स्कन्धेषु समारोप्य विलपन्ती निजं मानसिकम् अन्तर्द्वन्द्वं प्रस्तुतं कृतवती—"अहं किं करवाणि ? हिमांशो ! अहं किं करवाणि ? त्वमेव कथयस्व ?"।

हिमांशुः सर्वं धैर्यपूर्वकम् अशृणोत्। पुनः स तत उत्थाय सहसा प्रचलितः।

पुनर्बहूनि वर्षाणि व्यतीतानि परन्तु हिमांशुः कदापि शुभाया गृहे परावृत्य न समागतः। श्रूयते स्म यत् स तन्नगरं परित्यज्य कस्मिंश्चिदन्यस्मिन् दूरस्थिते प्रदेशे स्वकीयां नियुक्तिमकारयत्।।

• • •

# रूप्यकद्वयम्

अस्माकं मोहल्लानिवासी श्रीगोविन्दाचार्यः स्वकीयगृहस्य बहिरङ्गणे (लॉन) समाचारपत्रम् अधीयानो दृष्टिपथमागतः । तस्य शरीरस्योपरि सुन्दरं कौशेयवस्त्रं, महार्घं धौतवस्त्रं, बहुमूल्यकमङ्गुलीयकम्, गले सुवर्णश्रृङ्खलासम्बद्धा रुद्राक्षमालिका मुखे च तमाखुनलिका (पाइप) विराजते स्म ।

"किं भो ! कः समाचारः ? श्रूयते यद् भवान् नवीनं मारुतिकारयानं पञ्जीकृतवान् । कदा तद् आगमिष्यति ? मन्ये अग्रिमे मासे समागतं भवेत् ?" इत्यादि कथयन् अहं तस्य बहिरङ्गणस्य द्वारमुदघाट्य तत्रैव स्थितायामासन्द्यां समुपविष्टवान् ।

"मारुतिकारप्रापणे तु मासत्रयं यावत् प्रतीक्षा करणीया । सम्भवतः दीपमालिकोत्सवात् पूर्वमेवाऽधिगतं भवेत्" इति प्रतिब्रुवतां तेषां मुखमण्डले गर्वभावः समुदितः ।

"अस्तु, सुन्दरं कृतं भवता। मन्ये तदनन्तरं तु कारयानस्य मूल्य-वृद्धिरपि सभाव्यते।"

"अवितथमाह भवान् ! अस्तु, कथं समागतः ?"।

"एवमेव समागतः। आपणप्रस्थानकाले बहिरङ्गणे भवन्तं समुपविष्टं विलोक्य मनसि विचारः समुदितो यत् बहुतिथाद् भवान् दृष्टिपथं नाऽऽगतस्त-त्समाचारं ज्ञातुमित एव प्रस्थितः।"



"अस्तु, उपविश्यताम्।"

'न हि, पुनः कदाचिदागमिष्यामि। साम्प्रतमत्र भवानपि कुत्रचिद् गन्तुकामो वर्त्तते।"

"एवम् साम्प्रतं चित्रालये एकं सुन्दरं चलचित्रं वर्तते। भार्याया अभिलाष आसीद् यदद्य तदेव चलचित्रमवलोकनीयम्। यद्यपि टिकटप्राप्तौ तत्र महत्काठिन्यमासीत्, किन्तु सेवकस्य माध्यमेन यथाकथञ्चित् कृष्णक्रय-पद्धति (ब्लैक) द्वारा टिकटमवाप्तम्। दशरूप्यकाणां टिकटं सप्तदशरूप्य-कैरधिगतम्।"

"अहो ! एवं किल !" इत्युक्त्वाऽहं ततः प्रतिनिवृत्त एवाऽभूवम् इति तदैव मम दृष्टिः तत्रस्थितानां स्थलपद्मानाम् उपरि निपपात। "अरे ! सुन्दराणि खल्विमानि स्थलपद्मानि (गुलाब) ! इमानि विविधवर्णानि कुसु-मानि तु भवतो गृहस्य शोभां द्विगुणितां कुर्वन्ति। सुन्दरम्...अतिसुन्दरम् !"

"इमाः पुष्पवीरुधस्तु मया चण्डीगढ़नगरात् समासादिताः। प्रत्येकं वीरुधो मूल्यं त्रिंशद्रूप्याणि वर्त्तन्ते" तेषां वाक्ये दर्प इवासीत्। तदनन्तरं तेषां वीरुधाम्परिचयं. वपनविधिं, तत्र प्रयुक्तोर्वरकविषये च कथयन्तः आसन् इति तन्मध्य एवाऽस्माकं मोहल्लाप्रहरी बहादुरः (नयपालदेशीयः) समागतः। तं विलोक्य श्रीगोविन्दाचार्यः अन्यमनस्कभावेन पृष्टवान्—"किम्भो ! किम् अपेक्ष्यते ?"

"किमपि न हि, महाशय !...अहमिच्छामि यदग्रिममासस्य वेतने कृपया रूप्यकद्वयस्य वृद्धिं करोतु। साम्प्रतमहं स्वकीयकुटुम्बमपि नयपालादि-हैव समानीतवान्। सर्वेषां वस्तूनां मूल्यं प्रत्यहं वर्धतेतमाम्। अस्माकं वेतने बहुकालात् काचित् वृद्धिरपि नैव जाता...अत एव भवादृशान् महाशयान् निवेदयामि...."बहादुरो विनयावनतः प्रोवाच।

'तुभ्यं मोहल्लावासिनः कियन्ति रूप्याणि ददति ?''

''प्रत्येकं गृहात् पञ्चरूप्याणि प्राप्यन्ते।''

''अस्यां मोहल्लायां कियन्तो गृहा वर्त्तन्ते ?''

बहादुरः किञ्चिद् विरम्य मनसि च किञ्चिद् गणयित्वा विचारयन्नब्रवीत्—''सर्वे १३० गृहा वर्त्तन्ते।''

'तर्हि ६५०/–रूप्याणि तुभ्यं पर्याप्तं न वर्त्तन्ते ?''

''आम्⋯,प्रत्यहं वृद्धिम्प्राप्नुवन्ती महार्घता⋯''

श्रीगोविन्दाचार्यो मध्य एव रोषेण गर्जन्निव साक्रोशम् उक्तवान् – तूष्णीं भव⋯।''

श्रीमन् ! रूप्यकद्वयमेव तु मया याच्यते⋯।''

''न हि, किमपि नहि⋯प्रतिवर्षं वृद्धिं कुरुषे⋯क एवं तुभ्यं प्रदास्यति ?⋯''

''मान्यवर !⋯विगतवृद्धिस्तु त्रिवर्षपूर्वं सञ्जाता।'' इत्युक्त्वा बहादुरो मां दयार्द्रभावेन दृष्टवान्। संभवतः एतस्मिन् विषये स मदीयामपि संस्तुतिमपेक्षते स्म। परमेतस्यामवस्थायां मदीया संस्तुतिः कियत्प्रभावास्पदं भविष्यति - इति विशङ्कमानः किमपि नोक्तवान्। अहन्तु गोविन्दाचार्यस्य प्रतिवेशी एव आसम्। अत एव यदा स बहादुरो नयपाली मम पार्श्वे ह्यस्तने दिवसे वेतनवृद्ध्यर्थं निवेदितवान् तदा तस्य निवेदनं मया पूर्वमेवाऽङ्गीकृतमासीत्। किन्तु गोविन्दाचार्यस्य समक्षं तत्समये तस्य समुल्लेखोऽपि समुचितो न प्रतीयते स्म।

प्रायः पञ्चमिनटपर्यन्तम् उभयोर्मध्ये रूप्यकद्वयस्य कृते विवाद इव समवर्त्तत। अन्ततः स बहादुरः पराजित इव भूत्वा प्रतिनिवृत्तः। तस्य तथाविधं शिरो नमयित्वा निराश सतो गच्छतो विलोकनमपि तदानीं मत्कृते कष्टकारकं करुणोत्पादकं चाऽभवत्। तत्पश्चात् श्रीगोविन्देन तत्कृते तानि गालिवाक्यानि समुच्चारितानि येषां संकीर्त्तनमपि अत्र हास्यास्पदम्। तत्क्षणं तु तत्राऽवस्थानमपि मह्यं नाऽरोचत। अत एवाऽहं ततः सद्य एव प्रस्थितः।

गृहम्प्रति गच्छता मयाऽनुभूतं यत् श्रीगोविन्ददेवः यः खलु महार्घं कौशेयवस्त्रं धारयति, त्रिंशद्रूप्यकैरेकां वीरुधं क्रीत्वा गृहोद्यानं विभूषयति,

कृष्णक्रयपद्धत्या चलचित्रटिकटं क्रीणाति, कमनीयं सुवर्णाङ्गुलीयकं परिदधाति, मारुतिकारयानं क्रेतुमिच्छति, अर्थात् सर्वं व्ययं कर्त्तुं समर्थो वर्त्तते परन्तु रात्रौ जागरं जागरं प्रहरित्वं कुर्वाणस्य तस्य बहादुरस्य जीवननिर्वाहाय तत्कृतं न्याययुक्तं निवेदनमपि न शृणोति, प्रत्युत तं सततं तिरस्कृत्य मुहुरपशब्दायते । तस्य याच्ञा केवलं रूप्यकद्वयस्यासीत् । परन्तु किं श्रीगोविन्दाचार्यस्य कृते इदमसंभवं कठिनं वा समवर्त्तत ? ।

प्रस्थानसमये श्रीगोविन्दाचार्यो माम् अब्रवीत्—"शृणु भो ! संभवतः स बहादुरो भवत्समीपमपि भृतिवर्धापनार्थमागमिष्यति । भवता कठोरतया वर्तितव्यम् एभिः समम् । इमे धूर्त्ता भवन्ति ।" तत्समाकर्ण्य तत्राऽहं किमपि प्रतिवक्तुं न समर्थोऽभूवम् ।

एतद्घटनायाः त्रिदिवसाऽनन्तरं यदाऽहं स्वमहाविद्यालयात् गृहं समागतस्तदा मम पुत्री सोत्सुकमवादीत्—"तात ! किं भवान् एकं वृतान्तं वेत्ति ?"

"किमभूत् पुत्रि !"

"केनचित् बहादुरस्योपरि छुरिकायाः प्रहारः कृतः !"

"अरे ! दुःखम्... अतिदुःखम्... कथम् ! इदम् ? कुत्रेदम्...?" ।

"वृत्तान्तमिदं जातं यत् पञ्चसप्ततितमे क्रमाङ्कयुक्ते गृहे यः पितृव्यः पितृव्या च निवसतस्तौ सायं भ्रमणार्थं गच्छतः स्म । एतस्मिन्नेवाऽन्तरे पथि केनचित् साहसिकेन लुण्ठाकेन एकान्तमनुध्याय पितृव्याम् अवारोध्य तां स्वकीयानि समस्तानि सुवर्णाभूषणानि स्वशरीराद् उत्तारयितुम् आदिष्टम् । संयोगात् तदानीमेव बहादुरस्तदभिमुखमेव समागच्छति स्म । स तं साहसिकं लुण्टाकं तथा कुर्वन्तं विलोक्य तं च विरुध्य निगृह्य च पर्याप्तं संघर्षं कृतवान् । उभयोर्द्वन्द्वावसरे सहसैव स लुण्ठाकः बहादुरस्योपरि छुरिकायाः प्रहार कृत्वा पलायितोऽभवत् । श्रूयते यत् सम्प्रति बहादुरस्तु गम्भीरमाहतः सन् चिकित्सालये विद्यते ।"

"कस्मिन् चिकित्सालये वर्त्तते ?"

"रामकृष्णमिशनचिकित्सालये ।"

"अस्तु, त्वं मातरं कथयस्व यत् सा शीघ्रं मह्यं चायं प्रयच्छेत् । अहं तत्कालमेव तं द्रष्टुं जिगमिषामि ।"

"एवम्, अधुनैव कथयामि ' इत्युक्त्वा मम पुत्री चायनिर्माणाय मातरं वक्तुं गृहा-ऽभ्यन्तरे गतवती ।

न जाने कथमहं दारुणमन पीडया संग्रस्तः सन् मुहुर्मुहुस्तं बहादुरमेव चिन्तयन् समुद्विग्नः संजातः । तस्य कारणम् इदं नाऽभवत् यत् स छुरिका-प्रहारेण समाहतः सन् चिकित्सालये प्रापितः परन्तु तस्य कारणमिदम् अभवद् यत् पञ्चसप्ततितमे क्रमाङ्कयुक्ते गृहे ये महोदया निवसन्ति स्म ते त्वन्ये केऽपि नहि, प्रत्युत श्रीगोविन्ददेवाचार्या एव सपत्नीकाः प्रतिवसन्ति स्म ।।

• • •

# अयमेव ममात्मजः

श्रीशिवदेवमहोदयः सहसा निद्राम्परित्यज्य विष्टराद् उत्थाय चक्षूंषि परिमृजन् गृहकपाटमुद्घाट्य बहिरङ्गणे समागत्य आकाशाऽभिमुखं निरीक्ष्याऽनुमानं कृतवान् यत् सम्प्रति प्रातः ब्राह्ममुहूर्त्तः प्रवर्तत एव। मन्ये चतुर्वादन-समयो भवेत्।

कक्षे प्रतिनिवृत्य स स्वपत्नीं मालतीं स्कन्धयोः संस्पृश्य उत्थापयामास। साऽपि ससम्भ्रममेव उत्थितवती। उत्थाय चाऽब्रवीत्—"किमस्ति"?

"किं न प्रस्थातव्यम् इतः?"

"एवं किल, चलितव्यं तु वर्त्तत एव" सा खट्वातः उत्तिष्ठन्ती प्रत्युवाच।

उभावपि तौ तस्मिन्नेवाल्पप्रकाशे काले मुखं प्रक्षाल्य शनैः शनैः करस्पर्शमाध्यमेन स्वकीयानि वस्तूनि संगृह्य गृहस्य बहिर्द्वारमागत्य राजमार्गं

प्राप्तवन्तौ । क्षणपर्यन्तं च तौ स्वकीयज्येष्ठपुत्रस्य विमलेशस्य तद्गृहं विलोक्य पुनः रेलवेस्टेशनं प्रस्थितवन्तौ ।

कतिचिद्दिवसपूर्वमेव तौ स्वकीयकनिष्ठपुत्रस्य निखिलस्य गृहाद् इह समाजग्मतुः । अपमानम् उपेक्षां च सहमानौ यदा तौ समुद्विग्नौ भवतस्तदा एकस्य पुत्रस्य गृहम्परित्यज्य द्वितीयस्य पुत्रस्य पार्श्वे, द्वितीयपुत्रस्य च गृहं परित्यज्य प्रथमस्य पार्श्वे, एवं क्रमशः विमलेश-निखिलयोः पुत्रयोः गृहेषु गमनाऽऽगमनं कुर्वाणौ विगतं वर्षत्रयं यापितवन्तौ ।

श्रीशिवदेवस्य हस्ते एका लघुमञ्जूषा, तस्य पत्न्याः मालतीदेव्याश्च हस्ते एकं झोलकम् आसीत् । विमलेशस्य गृहात् रेलवेस्टेशनं केवलं त्रिकिलोमीटरपर्यन्तमेव दूरेऽभवत् । उभौ पदाती एव गच्छतः स्म । तौ उदासीनौ शनैः शनैः गच्छन्तौ शून्यनयनौ भग्नहृदयौ च भावनातिशयात् उद्विग्नताग्रस्तौ चाऽऽस्ताम् । रेलवेस्टेशनं सम्प्राप्य मालत्या आनने श्रान्ततारेखा समागता । सा सहसैव रेलटिकटगवाक्षस्याधस्तादेव भूमौ समुपाविशत् । तदवलोक्य श्रीशिवदेवोऽपि तत्रैवोपविष्टवान् ।

"हे राम ! किमिदमपि दिनं द्रष्टव्यमासीत् ?" इत्युक्त्वा मालती स्वकीयजानुनी हस्ताभ्यां पीडयन्ती स्थिता । शिवदेवस्तु मौनमाकलय्य अस्वस्थमुद्रायुतः इतस्ततः पश्यन्नासीत् । तदैव तस्य मनसि विमलेश-द्वारा प्रोक्तमिदमेकं वाक्यं स्मृतिपथमागतम्:' मनुष्यो वृद्धावस्थायामनुपयुक्तो भवन् व्यर्थवस्तुसदृशमेव भवति । परिवारस्योपरि समाजस्योपरि देशस्योपरि च स भार इव वर्तते ।"

"परन्तु पुत्र ! एष तु प्रकृतिकृतो नियमो वर्त्तते । प्रत्येकं नूतनं वस्तु कालानन्तरं पुरातनं भवत्येव । परन्तु यावत्पर्यन्तं तस्याऽस्तित्वं विद्यते तावत्पर्यन्तं यथाकथंचित्तस्योपयोगस्तु करणीय एव । पश्य, यानि वस्तूनि व्यर्थानि मत्वा क्षिप्यन्ते तन्माध्यमेनैव केचित् व्यर्थवस्तुसंग्रहीतारः सहस्राण्यपि रूप्याणि निर्मातुं समर्था भवन्ति ।" इति श्रीशिवदेवः स्वकीयम्प्रदत्तम् उत्तरमपि स्मरति ।

अस्तु, तदानीं तत्र रेलवे स्टेशने मालती स्वपत्युः श्रीशिवदेवस्य चिन्तानिमग्नम् आननं विलोक्य कम्पमानेन स्वरेण पृष्टवती—"किं त्वया कोऽपि निर्णयः कृतः ?"

शिवदेवमहोदयः सरोषम् उद्विग्नश्च प्रोक्तवान् "एतत्तु मया निर्णीतमेव यत् स्वपुत्रयोः समीपम् इतः परं नैव गन्तव्यम् ।"

मालती अन्यमनस्का कथयति—'अर्धं सेवानिवृत्तिधनं विक्रीय मन्ये भवता समुचितं नाऽऽचरितम् । यदि पूर्णं धनं प्रतिमासं प्राप्स्यत् तर्हि इयं स्थितिः कदापि नाऽभविष्यत् ।"

"यदि अर्धं सेवानिवृत्तिधनं (पेंशन) न व्यक्रेष्यम् तर्हि किं सीतायाः पाणिग्रहणं कर्त्तुं प्राभविष्यम् ? अहन्तु भगवन्तं बहु धन्यवादं विज्ञापयामि यत् तस्या विवाहः सम्पादितः, अन्यथा सा पि आवाभ्यां सममेव इतस्ततः भ्रमणमकरिष्यत्, अथवा साश्रुनयना भ्रात्रोः समीपमेव दिनान्यगणयिष्यत् ।" इति श्रीशिवदेवः प्रत्यवदत् ।

मालती मौनमास्थाय स्वशाटिकाप्रान्तेन चक्षुषी परिमृजन्ती स्थिता ॥ तदवलोक्य श्रीशिवदेवः क्षुब्धोऽब्रवीत्—"न मह्यमेतत् तव रोदनं विलपन वा कथमपि रोचते । यदि त्वमिच्छसि तदा माम्प्रतमपि त्वं कस्यचिदपि तनयस्य समीपे गन्तुं शक्नोषि । त्वं तत्र गत्वा सर्वमपि सोढुं शक्नोषि । स्त्रीषु सहनशक्तिः पर्याप्तं भवति ।"

"भवान् मां किं मन्यते ?" सा सकोपम्प्रत्युवाच ।

"अस्तु, नैवाऽत्र कोपस्य कोऽप्यवसरः" इत्युक्त्वा श्रीशिवदेवः पुनरवदत् "सेवानिवृत्तिधनं तु मया विवशतायां विक्रीतम् । परन्तु त्वया तु स्वकीयानि मूल्यवन्ति स्वर्णाभूषणानि वधूभ्यां प्रदाय कथं बुद्धिमत्त्वं सम्पादितम् ?" ।

तदाकर्ण्य मालती शान्ता सञ्जाता । तां तूष्णीं विलोक्य श्रीशिवदेवोऽपि मौनः सञ्जातः ।

परितस्तत्र स्टेशने बहवो जना इतस्ततः शयाना दृश्यन्ते स्म । ते सर्वे शनैः शनैः समुत्थाय टिकटगवाक्षस्य समीपं गत्वा स्वकीयानि टिकटानि नेतुं प्रारब्धवन्तः । ट्रेनयानस्य तत्रागमनसमयोऽपि सञ्जातः ।

"वस्तुतः प्रौढावस्थायां सन्तानोत्पादनकार्यमपि पापमिव वर्तते" श्रीशिवदेवो गम्भीरमुद्रायाम् अवादीत्—"आयुषः त्रिंशद्वर्षपर्यन्तमेव इदमपि कार्यं सम्पादनीयम् ।"

तदाकर्ण्य मालती स्वकीयं मुखं वस्त्राञ्चलेन पिधाय हसितुमारब्ध-

वती । तदवलोक्य श्रीशिवदेवः पुनरवदत् – "कथं हससि ? यदि चत्वारिंशद्-वर्षाऽवस्थायाम् अस्माकं कन्या नोत्पन्नाऽभविष्यत् तर्हि वयं तस्या विवाहं स्वकीयसेवाकाले एव समपादयिष्याम । तदा सेवानिवृत्तिधनस्य विक्रय–व्यवस्थाऽपि न करणीयाऽभविष्यत् ।" किञ्चिद् विरम्य पुनः सोऽब्रवीत्– "किन्तु क इदं जानाति स्म यत् सत्यपि सेवासंलग्ने पुत्रद्वये आवाम् एवं विकीर्णौ विपन्नौ च भविष्यावः ।"

"त्यजतु भवान् सर्वमेतत्··· यदि चलनीयं वर्तते तदा टिकटं क्रीणातु" मालती विमनस्का प्रोक्तवती ।

"अधुना बहुसमयो वर्तते ।" शिवदेवमहोदयः प्रत्युवाच ।

× × × × ×

प्रातःकालिकी सूर्योदयस्याभा सर्वतः प्रसरति स्म । टिकटगवाक्षस्य सम्मुखं जनानां समूहो वर्धतेतमाम् । शिवदेवमहोदयस्य दृष्टिस्तत्र गमनाऽऽगमनं कुर्वतां मनुष्याणामुपरि संसरति स्म । मन्ये स तथाविधानां यात्रिणाम् अन्वेषणं करोति स्म येषां मनःस्थितिः तत्समाना बभूव । परन्तु तत्रैकोऽपि जनस्तथाविधाननस्तस्य दृष्टिपथं नागतो यस्तथाविधो दुःखितः समुद्विग्नः शून्यतासम्पन्नश्च स्यात् । स किञ्चिद् उद्विज्य श्रान्तः सन् मालतीं प्रोवाच—

"त्वं तानि दिनानि स्मरसि यदा विमलेशो ज्वरग्रस्त आसीत् ?" ।

"कथं तद् विस्मर्तुं शक्नोमि ?" सा शान्तम् अग्रे प्रत्युवाच—

"चत्वारि दिनानि चतस्रश्च निशाः तस्य विष्टरस्य पार्श्वे एव अस्माभिर्यापिताः ! तत उत्थानस्य प्रश्न एव नासीत् तस्मिन् विषमे काले ।"

"हुँ ह ···" सा भूतकालं संस्मृत्य तत्रैव निमग्ना सञ्जाता । तस्या मुखमण्डले तदानीमपि महती उद्विग्नता समापतिता । "सहस्राणि रूप्याणि तस्य चिकित्सायां व्ययीभूतानि । चिकित्सकस्तु एकदा जीवनम्प्रति नैराश्यमेव प्राकटयत् । पुनरपि परमेश्वरस्यैव कृपाप्रभाव आसीद् यत्······ " इतोऽग्रे शब्दास्तस्या ओष्ठयोरेव निमग्ना अभूवन् ।

'अथ निखिलस्य प्रसवप्रसङ्गे तु इदमेव प्रतीयते स्म यत् तव जीवनमेव समाप्तं भविष्यति ।"

'किमर्थं तत्सर्वं स्मरसि ?" मालती समुद्विग्नमानसा निजगाद ।

शिवदेवमहोदयो दीर्घं निःश्वस्याऽग्रे ब्रवीति "मातापितरौ स्वकीय-सन्तानार्थं किं किं न कुरुतः, किन्तु यदैव तयोः सन्तानानि वृद्धि प्राप्य स्वसामर्थ्यमधिगच्छन्ति तदा तस्याऽनुभवं ते न किमपि जानन्ति। तदर्थं तु तेषां पितरौ निरर्थके वस्तुनी इव भवतः।"

"संभवतः कौचिदेव पितरौ तथाविधौ अभविष्यतां यौ स्वकीयसन्तानार्थं त्यागं नाऽकरिष्यताम्। निखिलविमलेशावपि तु स्वकीयसन्तानार्थं किं त्यागं न करिष्यतः?"

"किन्तु तौ तेभ्यः काम् आशां कुरुतः?"

"अस्तु, त्यजैतत् सर्वम्। तदर्थं स्वहृदये मलिनतां न धारयस्व। मातापितरौ तु केवलमिदमेव विचारयतो यत् तयोः पुत्राः क्वचिदपि स्युः, किमपि च कुर्युः, परन्तु सदैव सुखिनो भवेयुः! स्वचक्षुषा-समाभिर्दृष्टं यत् ते सुखिनः सन्ति। तदेव पर्याप्तम्। अस्माकम् अधुना किम्? अवशिष्टं जीवनं यथाकथञ्चित् यापयिष्यावहे।" इति सा व्यथासिक्तया वाचा प्रत्यवत्।

श्रीशिवदेवमहोदयस्तदाकर्ण्य मौनम् अवस्थितः।

"पश्यतु भवान्, सूर्योदयः समभवत्। मुखं प्रक्षाल्य किमपि भुङ्क्ताम्"–मालती उक्तवती।

"अथ त्वम्?"

"मह्यं तु साम्प्रतं किमपि भोजनस्याऽभिलाष एव न विद्यते।"

"नैव चिन्तयस्व किमपि। टिकटधनाऽतिरिक्तमपि मम पार्श्वे विंशतिरूप्याणि वर्त्तन्ते।"

"नाऽहं किमपि भोक्ष्ये, मम मनस्तु न जाने कथमिवाऽनुभवति···किन्तु भवान् किमपि भुङ्क्तामेव। भोजनं विना प्रातः प्रतिश्यायो वर्धते चित्ता-स्वस्थता च संजायते" मालती ब्रवीति।

"अस्तु, कृपया निजचिकित्साज्ञानं न कथयस्व, अहं मुखादिकं प्रक्षाल्य समागच्छामि। चक्षूंषि पिधाय नाऽत्र सन्तिष्ठस्व, इह मञ्जूषायामपि ध्यानं करणीयम्।"

"अरे गच्छ, मञ्जूषायां किं वर्त्तते यत् कोऽपि नीत्वा पलायिष्यते?"

"त्वयि तु बुद्धिरेव न वर्त्तते। अरे! यो नीत्वा गमिष्यति स किं

जानाति यदस्यां तु केवलं कानिचित् पुरातनानि वस्त्राण्येव वर्त्तन्ते। स त्वनन्तरं पश्चात्तापमेव प्रकटयिष्यति, परं वयं तु नग्ना इव भविष्यामः।"

तदैव सहसा किमपि संस्मृत्य सा मञ्जूषां स्वनिकटमाकृष्य शिवदेव-महोदयमब्रवीत्—"अस्तु, गच्छतु भवान् निश्चिन्तश्च भवतु।" किञ्चित्काला-ऽनन्तरं श्रीशिवदेवः प्रत्यागच्छत्। झोलातः वस्त्रखण्डमेकमाकृष्य मुखं प्रोञ्छन् उवाच—"चायं तु पातव्यमेव।"

'चाय' शब्दमाकर्ण्य मालत्यां नयनेषु चमत्कार इव प्रादुर्भूतः। सा शिवदेवमहोदयं विलोक्याऽब्रवीत्—"मन्ये विमलेशः सम्प्रति निद्राम्परित्यज्य उत्थितो भवेत्। अस्मिन्नेव समये तु चायं नीत्वा हं तस्य समीपं गच्छामि स्म। माम् अनवलोक्य त्वामपि चाऽप्राप्य स आवां मार्गयितुमिहाऽपि आगन्तुं शक्नोति।"

अन्तिमं वाक्यं तु श्रीशिवदेवमहोदयाय रोचते स्म, परन्तु स मौन एवाऽभवत्। "यदि सोऽस्मान् नेतुं समागच्छेत् तदा भवता किमपि न वक्तव्यम्। भवान् शीघ्रमेव कोपाविष्टो भवति।" मालती प्रत्येकं शब्दं चर्वयन्तीवाऽब्रवीत्।

तौ साम्प्रतमपि मौनावस्थायां बभूवतुः, परन्तु तयो सोत्सुकानि नयनानि तत्र जनसम्मर्दे एकं चिरपरिचितमाननं (विमलेशरूपात्मकम्) अन्विष्यन्तीवाऽवर्त्तन्त।

ट्रेनयानं स्वप्रस्थानसूचकं ध्वनिं वारंवारं प्रवर्त्तयति स्म। उभावपि निराशौ सञ्जातौ। ट्रेनयानस्य गवाक्षस्य समीपं स्थितयोस्तयोदृष्टिः प्लेट-फार्मस्थाने कमपि मार्गयति स्म किन्तु तदाननं तत्र नैव दृष्टिपथमागतं यस्य प्रतीक्षायां तौ बभूवतुः।

× × × ×

ट्रेनयानस्य गतिः शनैः शनैरवर्धत। उभौ दीर्घं निःश्वस्य शान्तौ सञ्जातौ। मालती चक्षूंषि निमील्य विचारेषु निमग्ना भवत्। श्रीशिवदेवोऽपि शिरः पृष्ठतः कृत्वा चिन्तारतः सञ्जातः। सहसा मालती पृष्टवती—"त्वया तस्मै पत्रं प्रहितं न वा?"

श्रीशिवदेवमहोदयो विचारमग्न एवाऽब्रवीत्—"स्टेशने स आगमि-ष्यति। यदि नाऽऽप्यागमिष्यति तदा तस्य गृहस्य संकेतो मम पार्श्वे वर्त्तते।"

"भवान् पूर्णतया विश्वसिति यत् तस्य गृहे···"

"त्वं तूष्णीं भव···" शिवदेवमहोदयः साक्रोशमब्रवीत् "त्वदर्थं तु स सदैव परकीय इव वर्त्तते। निजसन्तानतुलनायां तुभ्यं कियान् अभिलषितः सः ? त्वया तु सर्वदैव स किञ्चिदुपेक्षयैव पालितो मानितश्च।" मालती ससम्भ्रमं तूष्णीम्भावम्प्राप्तवती। श्रीशिवदेवमहोदयश्च अनेकवर्षपुरातने पूर्वस्मिन् ससारे विचरणं कुर्वाणस्तदानीन्तनं दृश्यं स्मारं स्मारं तत्रैव विलीन इव समवर्त्तत।

··एकदा शिवदेवमहोदयः कार्यालयीयकार्यवशात् बसयाने यात्रां प्रकुर्वाण आसीत्। एकस्मिन् स्थले यदा बसयानं निरुद्धमभूत् तदैव कश्चित् सप्तवर्षीयो बालकस्तत्र समागतः। तस्य शरीरे केवलमेकं जीर्णं पैन्टवस्त्र-मासीत्। सर्वेषां यात्रिणां पुरतो हस्तं प्रसार्य याच्ञाकार्यं कुर्वाणं तं बालक-मालोक्य तस्य दयनीयदुरवस्थाद्रवितोऽसौ तम् अपृच्छत्—"किम् भो ! किं तव मातापितरौ न वर्त्तेते पुत्र ?"

"बाबूजी ! नैव कोऽपि ममाऽस्ति संसारे।"

"मया सह चलिष्यसि ?"

"कुत्र ?"

"ममैव गृहे।"

तदनन्तरं स तं बालकं स्वकीये गृहे समानीतवान्। तस्य नामधेयं च एकस्यां पाठशालायां लेखयित्वा तं "प्रकाश" इति नामधेयेन सर्वे तस्य समा-ह्वानं कृतवन्तः। स पाठशालायां गमनात् प्राक् ततो निवृत्य च मालत्या समं गृहकार्येषु सहायतां करोति स्म। शिवदेवमहोदयोऽपि तस्याऽध्ययने रुचिं विलोक्य तत्र पर्याप्तं ध्यानं ददाति स्म। प्रकाशो दशमकक्षायां प्रथमश्रेण्या-मुत्तीर्य स्वकीय परिश्रममपि सार्थकं कृतवान्। तदनन्तरं शिवदेवमहोदयः कस्मिंश्चिद् औद्योगिकप्रशिक्षण-संस्थाने तं विद्युत्कार्ये प्रशिक्षणाध्ययनार्थं प्रवेशं कारितवान्। प्रकाशोऽपि अनन्यमनस्कः सन् प्रशिक्षणमधिगम्य कर्णपुरे नगरे एकस्मिन् कार्यशालायां नियोजनम्प्राप्तवान्।

निखिल विमलेशयोर्दृष्टिपथे तु प्रकाशस्य सत्ता तेषां गृहसेवक इवाऽ-भवत्। पुत्राणां च कारणादेव मालतीदेवी अपि प्रकाशाय तं स्नेह दातुम-समर्था सञ्जाता यथाविधं स्नेहं श्रीशिवदेवमहोदयस्तस्मै प्रायच्छत्। स प्रकाशं पुत्रम् इवामन्यत। तथा च तदीयकारणात् स गृहे समुत्थितं कञ्चिदपि कलहं गम्भीरतया न ध्यातवान् प्रत्युत तस्य उपेक्षामेव कृतवान्।

यदा प्रकाशः स्वनियोजनकार्ये गन्तुमुद्यतोऽभवत् तदा स तं कथितवान्—"अहम् अद्य अतीव प्रसन्नोऽस्मि यत्त्वं स्वावलम्बी भूत्वा इतो गृहाद् गच्छसि । मनोयोगेन सर्वत्र कार्यं सम्पादनीयम्, अथ च सर्वदाऽभ्युत्थानाय प्रयतितव्यम् । यदि कापि कन्या मनोऽनुकूला लभ्यते तदा विवाहोऽपि करणीयः । यथावसरं पत्रादिकं प्रदेयम्" इति ।

"भवता यदा कदा मम गृहे समागन्तव्यमेव । सम्बन्धो न समापनीयः । अहन्तु जीवनेऽस्मिन् भवन्तं कथमपि विस्मर्त्तुमक्षमः । आजीवनं च भवदृणात् मुक्तिरपि न सम्भवा" इति प्रकाशो रुद्धकण्ठः प्रत्युवाच ।

तं हृदयेन समाश्लिष्य स प्रोक्तवान्—"कदाचिदपि त्वया हताशेन न भाव्यम् । मम आशीर्वचांसि सदैव त्वया सममेव भविष्यन्ति ।"

परन्तु अभिलषन्नपि शिवदेवमहोदयः कर्णपुरं गन्तुं कदापि न प्राभवत् । प्रकाशस्य सेवानियोजनाऽनन्तरमेव च स स्वयमपि सेवानिवृत्तः सञ्जातः । तदनन्तरं च स्वदुहितुर्विवाहप्रसङ्गे व्यस्तः समभवत् । तत्पश्चात्तु स्वकीयैरार्थिकैः कष्टैः पीडितः सन्तत्रैव समुद्विग्नमानसो भूत्वा स्वसुतैः समुत्पादितमपमानपीडागरलं पिबन् साम्प्रतिकीं परिस्थितिं प्राप्तवान् ।

यदा कदा स प्रकाशं पत्रमवश्यं प्रहितवान् । एकदा प्रकाशः स्वकीये पत्रे तं लिखितवान्—"..... सम्प्रति सेवानिवृत्ताः सन्ति भवन्तः । यदि चाऽन्यथाभावं मनसि न कुर्वन्तु तदा कानिचिद् रूप्याणि प्रेषयेयम्.....।" परन्तु तेन तद् वर्जितम् । प्रकाशस्तु स्वबिवाहात्पूर्वमपि पत्रे लिखितवान्—"बाबू जी, कृपया भवान् मातृदेव्या सममिहैवाऽऽगत्य कन्याम् अवलोकयतु... तदनन्तरमेव विवाहस्य प्रस्तावोऽन्तिमरूपेण स्वीकृत्य कन्यापक्षं सूचयिष्यामि...।" किन्तु निखिलविमलेशयोः पत्नीभ्यां कृतेन विरोधेनैव स तत्र गन्तुं न समर्थः सञ्जातः । तेन पत्रद्वारैव तस्मै निजाशीर्वचांसि सम्प्रेषितानि ।

× × ×

ट्रेनयानं कस्मिंश्चित् स्टेशने समवरुद्धम् । तस्य चिन्तनमुद्राऽपि सहसा भग्नतां प्रापत् । स कदाऽपि मनसि न विचारयति स्म यदस्याम् अवस्थायां प्रकाशस्य पार्श्वे गन्तव्यं भविष्यति । तस्य मनसि इयं शङ्का त्ववश्यमासीद् यत् न जाने तस्य पत्न्यै तस्य तत्र निवासो रोचिष्यते न वा, किन्तु स स्वकीयाम् इमां शङ्कां मालत्याः समक्षं कदापि न प्रकटितवान् ।

किं त्वं सुप्तवती ?" शिवदेवः शनैरब्रवीत् ।

मालती चक्षुषी उन्मीलितवती। तदैव चायविक्रेता तत्र समागतः। स मृत्तिकापात्रे कपद्वयं चायं नीत्वा एकं मृत्पात्रं मालत्यै प्रदाय चायं पातुं प्रारब्धवान्। चायपान कुर्वन्नेव स मालतीं प्रोक्तवान्—"प्रकाशस्य भार्यायै किमपि दातव्यमासीत्, परन्तु किं कुर्याम्? विवशता वर्त्तते·· पुनरपि रिक्त-हस्तगमनमपि तत्राऽसमीचीनम्।" मालती तु तत्सर्वमाकर्ण्याऽपि मौनमास्थाय चायपाने निरताऽवर्त्तत।

यथैव ट्रेनयानं कर्णपुरस्टेशने समागतं तयोरुभयोरपि दृष्टिः प्लेटफार्म-स्थाने धावन्ती समवर्तत। तस्य डिब्बायानं यदा पूर्णतया रिक्तं सञ्जातं तदा सोऽपि बहिरागत्य मालत्या समम् इतस्ततो दृष्टिक्षेपं कुर्वाणोऽतिष्ठत्। तस्मिन्नेव समये प्रकाशः प्रत्येकडिब्बायाने दृष्टिक्षेपं कुर्वाणस्तावेव मार्गयन् दृष्टिपथमागतः। उभयोरपि मुखमण्डले प्रसन्नतायास्तरङ्गः समुद्भूतः श्री-शिवदेवः साधिकारं समाह्वयत्- "प्रकाश! हे प्रकाश! इह पश्य।"

तं विलोक्य प्रकाशस्य मुखे प्रसन्नता परिव्याप्ता। उभयोश्चरणस्पर्शं विधाय संक्षेपेण च कुशलक्षेमं पृष्ट्वा स तस्य मञ्जूषां झोलकं च स्वहस्ते निगृह्य प्लेटफार्मात् बहिराजगाम। बहिरागत्य च रिक्शायाने तौ समारोह्य स्वयं स द्विचक्रिकायामारुह्य गृहाभिमुखं प्रस्थितवान्।

प्रकाशस्य पत्नी किञ्चिदवगुण्ठनं विधाय तेषां स्वागतार्थं गृहद्वारि पूर्वत एव प्रतीक्षमाणा बभूव। गृहप्रवेशसमकालमेव सा-पि तयोश्चरणस्पर्शं कृत्वा स्वागतं कृतवती। भोजनानन्तरं तु प्रकाशः श्रीशिवदेवमहोदयेन सह वार्त्तालापं कुर्वाणो नानाविधान् पुरातनसमाचारान् अधिगन्तुकामो बहुकालं यापितवान्। स तस्यागमनेन परमः प्रसन्नः प्रतीयते स्म। तस्य भार्याऽपि रात्रौ मालतीदेव्याः सेवायां निमग्ना भूत्वा शनैः शनैस्तस्याः पादौ पीडयन्ती स्वकीयं गृहवृत्तान्तं निवेदितवती।

रात्रिकालिकी निःशब्दता वर्धते स्म। नैव श्रीशिवदेवमहोदयस्य नेत्रयोर्निद्रा बभूव, नाऽपि च मालतीदेव्यपि शेते स्म। अन्ततः मौनमपास्य श्री शिवदेवः पत्नीम् अब्रवीत्–

"बहुकालाऽनन्तरं सोपधाने मृदुविष्टरेऽधिशयनादेव मन्ये निद्रा न समागच्छति किम्?"

सा किमपि न प्रत्युवाच।

"किं चिन्तयसे?"

३

"प्रकाशस्यैव विषये चिन्तयाम्यहम् ।"

"किम् ?"

"स त्वस्मभ्यं कियन्तं स्नेहं समादरं च प्रदाय स्वागतं करोति । तस्य भार्याऽपि कथं प्रेम्णा प्रवर्त्तते । अस्मदीयाः सुताः पुत्रवध्वश्च नः काममपि कामनां नैव पूरितवन्तः ।" पुनः दीर्घं निःश्वस्याऽब्रवीत् - "किन्तु प्रकाशस्य समक्षम् अस्माभिः स्वकीयं सर्वं यथार्थं वस्तुजातं वक्तव्यमेव ।"

"मया तु सर्वमेव वृत्तान्तं याथातथ्येन तत्समक्षम् उक्तम् ।"

"अरे ! अस्तु, तत्सर्वमाकर्ण्य किम् उक्तवान् सः ?"

"तेनोक्तं यत् बाबू जी ! भवन्तस्तु व्यर्थमेव समुद्विग्नाश्चिन्तातुराश्च भवन्ति । अहं भवदीयस्तृतीयः पुत्रोऽस्मि । भवद्भिः कुत्रचिदपि न गमनीयम् इतः परम् । मया तु सर्वे प्रतिवेशिन इदमेव कथिताः यन्मम मातापितरौ समागतौ । तौ विवाहवेलायाम् आगमनेऽसमर्थौ बभूवतुः । तदानीं त्वहं मातृचरणानाम् अस्वस्थताव्याजमाख्याय भवतामनगमनकारणं निरूपितवान् । अधुना भवतामागमनेन इह निवासेन च मम समुत्साहो द्विगुणितो भविष्यति ।"

तत्सर्वमाकर्ण्य मालती परमसन्तुष्टा सती पश्चात्तापस्वरेण निजगाद — "तदानीम् अस्माभि साधु नाऽऽचरितम् । तस्य विवाहकाले निश्चितमस्माभिरागन्तव्यमासीत् ।"

'अस्तु, अधुना तु तत्सर्वं परिसमाप्तं व्यतीतं च । अस्मदीया विवशता सा न जानाति किम् ?" श्रीशिवदेवः प्रत्यवदत् ।

किञ्चित्कालपर्यन्तं कक्षे तूष्णीम्भावः शान्तिश्चाऽभवत् । ततो निःशब्दताम् अपास्य मालती पतिमब्रवीत्—"मम समीपे एकमाभूषणं वर्तते ।"

"त्वया तु पूर्वमुक्तं यत् त्वत्पार्श्वे किमप्याभूषण न विद्यते ?"

"न हि, एकं बहुमूल्यम् आभूषणं मम समीपे साम्प्रतमपि वर्तते ।"

"किमस्ति तत् ?"

"एकं लाकेटयुक्तं सुवर्णगोस्तनाऽऽभूषणम् (चार लड़ियों का सोने का हार) ।"

"तदेव तु न हि यदस्माकं जननी सद्योविवाहाऽनन्तरं मुखदर्शनकाले तुभ्यम् प्रदत्तवती ?"

"एवम् तदेव।"

"साम्प्रतं तु तत् पञ्चदशसहस्ररूप्याणां भविष्यत्येव।" किञ्चिद् विरम्य श्रीशिवदेवः पुनरब्रवीत् "मया तु विचारितं यत् तदाभूषणं त्वया विमलेशस्य भार्यायै प्रदत्तम् आसीत्।"

"यदि विमलेशस्य भार्यायै प्रादास्यं तर्हि तथैव निखिलेशस्य भार्यायै प्रदातुं कुतः आनेष्यम् ? अत एव तत् कस्यैचिदपि न दत्त्वाऽहं स्वसमीपे एव सुरक्षितवती।"

तत्सर्वं निशम्य श्रीशिवदेवस्तूष्णीमभवत्।

"अहं विचारयामि यत् तदाभूषणम् अहं प्रकाशस्य भार्यायै प्रयच्छेयम्"—मालतीदेवी जगाद।

"साधु चिन्तितं त्वया। तस्यै एव प्रदेहि" इत्युक्त्वा स प्रसन्नमुद्रया अग्रे प्रोक्तवान् "अधुना तु केवलम् अयमेवाऽस्मदीय आत्मजः सञ्जातः॥"

• • •

# अनाघ्रातं पुष्पम्

तदानीन्तनमेतद् वृत्तान्तं यदा हम् एम्० ए कक्षायां प्रविष्टोऽभवम् । अकस्मादेवाऽयं समाचारः कक्षायां प्रसारितोऽभवद् यद् अस्माकमेकः कृशकायः सौन्दर्यरहितश्च सहपाठी श्रीदेवदत्तो बी० ए०, कक्षाया एकं गृहाध्यापनम् (ट्यूशन) अधिगतवान् । कक्षायां चर्चा तु गृहाध्यापनकार्यस्य न हि परन्तु तस्याः सौन्दर्यसम्पन्नायाश्छात्राया आसीद् यस्या गृहाध्यापनकार्यं देवदत्तोऽधिगतवान् । चर्चानुसारेण सा छात्रा स्वपित्रा समं पञ्चवर्षपर्यन्तं विदेशप्रवासं कृत्वा इह समागता आसीत् । तस्याः परिधानानि प्रायः अधुनातनानि विदेशिसभ्यताप्रभावितानि आसन् तथा च आंग्लभाषाया उपरि तस्या महान् अधिकारः आसीत् । फ्रेञ्चजर्मनस्वीडिशभाषास्वपि तस्या गतिरासीद् येन विश्वविद्यालयीया अध्यापका अपि ताम् आद्रियन्ते स्म । किन्तु तस्याः संस्कृतभाषा दुर्बला आसीद् येन तस्या जनकेन श्री पं० सीतारामभिश्रेण गृहाध्यापनव्यस्थाद्वारा तदेव निराकर्तुं प्रबन्धः कृतः ।

छात्रायाः सौन्दर्यचर्चाम् उन्मुक्तस्वभावं चाऽऽकर्ण्य अस्माकं सर्वेषां सहपाठिनां मनसि देवदत्तम्प्रति महदीर्ष्याभावः समुत्पन्नः । अयं देवदत्त

एव कथं श्रीसीतारामिश्रद्वारा गृहाध्यापनकार्यार्थं वृतः ?। देवदत्तस्तु शिखां दधाति। धौतवस्त्रं परिदधाति, दर्शनेन मूर्खो ग्राम्यः प्रतीयते, यदा चाहं पैन्ट-शर्ट-वस्त्रं परिदधामि, नवकेशविन्यासं साधयामि, देवदत्तादप्यधिकः सबलः सुन्दरः स्वस्थश्च भवामि पुनरपि कथं मन्दभाग्यता मम यत् तादृशी सुन्दरी बाला गहाध्यापनार्थं मया न प्राप्ता। संभवतो भाग्यमपि सर्वदा सौन्दर्यं न पश्यति। तस्मादेव देवदत्तस्य बी० ए० परीक्षायां मदपेक्षया शतम् अङ्का अधिका आसन्। मन्ये तस्मादेव तेनेदं गृहाध्यापनकार्यम् अधिगतं भवेत्। यदि परीक्षायां प्राप्ताङ्कैः समम् मदीयमनोगतभावानामप्यङ्काः स्युस्तदा मन्ये मम सम्पूर्णो योगो देवदत्तस्य प्राप्ताङ्कादप्यधिको भवेत्। अस्तु, अस्माकमपि अभिलाषस्तथाविधस्य कस्यचिद् गृहाध्यापनस्य आसीत् किन्तु दुष्कृतं दैवेन।

एकदा विश्वविद्यालये सहसा देवदत्तः समक्षमेव आगच्छन् दृष्टः। अहं सत्वरमुपसृत्य निजाम् इर्ष्यावृत्तिं निगूह्य उपरिष्टाद् विहस्य गृहाध्यापनप्राप्त्यर्थं तस्मै वर्धापनानि शुभकामनाश्च निवेदितवान्। देवदत्तस्तु ईर्ष्याग्निदग्धायां सम्पूर्णकक्षायाम् एकमात्रं मदीयमेव शुभकामनाप्रदानमाकर्ण्य उक्तवान्—'समस्तायां कक्षायां त्वमेवैको भद्रः प्रतिभासि।"

अहम् उक्तवान्—'सखे ! त्वं तु न केवलं सज्जन एव परन्तु योग्योऽपि वर्त्तसे। एतद् गृहाध्यापनकार्यं तु त्वयैव प्राप्तव्यमासीत्। तत् समीचीनमेव संवृत्तम्।"

वस्तुतस्त्वहं तस्याश्छात्रायाः सम्बन्धे ज्ञातुमुत्सुकोऽभूवम्। अन्ततः संदिग्धमनसा तं पृष्टवान्—"किम् भोः ! कीदृशी सा ?'

"अतिधनाढ्यस्य जनकस्य पुत्री वर्त्तते, तस्याः पिता उच्चन्यायालये प्रसिद्धः अधिवक्ता वर्त्तते, एकं सुन्दरं विशाल भवनम्, द्वे कारयाने, त्रयः सेवकाः ......।"

'न हि भोः ! अहम् छात्रां पृच्छामि... कन्याम् ?" अहम् कन्याशब्दोच्चारणे किञ्चिद् बलं दत्वा व्याहरम्।

"तव किं तात्पर्यम् ?" देवदत्तः प्रत्युवाच।

"तात्पर्यमेतद् यत् किं सा अतीव सुन्दरी वर्त्तते ?"

तथा स्पष्टतया मम वचांसि समाकर्ण्य देवदत्तस्य मुखम् आरक्तं सञ्जातम्। सोऽब्रवीत्—"अरे ! अहं तु न जानामि। वस्तुतः तस्याः मुखमण्डलमेव मया न दृष्टम्।"

"किम् अध्यापनकाले पृष्ठं कृत्वा तिष्ठसि ?"

"अभिमुखमेव तिष्ठामि किन्तु तस्याः समक्षं मया स्वीकीये चक्षुषी नोत्थापिते ।"

"कथं नोत्थापिते ?"

"मर्यादाविहीनता द्योतते ।"

"अस्तु, तस्याः पादौ तु त्वया दृश्येते ?"

"पादयोस्तु चप्पलं परिदधाति ।" इत्युच्चार्य देवदत्तो मम चित्तस्याऽभद्रभावम् आध्याय स्मितवान् । मन्ये तेन चिन्तितं यत् कियत् सुन्दरं तस्य उत्तरम् । अहमपि तस्य प्रशसां प्रकुर्वाण आह—"वस्तुतस्त्वं तु अतीव सहृदयः सज्जनश्च पुरुषो वर्त्तसे ।"

× × × ×

एकदा देवदत्तः स्वभावविपरीतः उद्विग्नः असहजश्च मम दृष्टिपथमागतः । अहं पृष्टवान्—" किं भोः ! कथम् एवम् ? का वार्ता ? का चिन्ता ? कथं रुदिताननो व्याकुलश्च ?"

स आह—"ग्रामाद् इदं वृत्तान्तमागतं यत् मदीया माता अतिरुग्णा वर्तते । तस्याः परिचर्या अवश्यं कर्तव्या मया, परन्तु गृहाध्यापनकार्यम् (ट्यूशन) अत्र नितान्तम अनुपेक्षणीयम् । गृहाध्यापनविरामे बैरिष्टरमहोदयः (श्रीसीतारामिश्रः) कोपं करिष्यति ।"

अहम् उक्तवान्—"कथं कोपिष्यति ? कदाचित् सर्वेभ्य एव विवशता भवत्येव । त्वं गत्वा वार्त्तां कुरु ।"

"कृतो मया वार्तालापः । स कथयति यत् परीक्षायां केवलं दश दिनानि वर्त्तन्ते, वन्दिता (तस्य पुत्री) च संस्कृतभाषायाम् अत्यन्तं दुर्बला वर्त्तते ।"

"किं तर्हि तव विचारे यदि वन्दिता संस्कृतभाषायां दुर्बला भविष्यति तदा शत्रवो देशे आक्रमणं करिष्यन्ति ?"

"बैरिष्टरमहोदयः कथयति यत् यदि गमनम् आवश्यकमेव तर्हि कस्यचिद् उपयुक्तस्य पुरुषस्य व्यवस्थां कृत्वा गच्छतु । अधुना चाऽहम् उपयुक्तं पुरुषं कुत आनयेयम् ?"

सहसा मम मनसि विचारः समुत्थितो यत् पुरुषस्तु अहमपि भवामि । यावान् खलु उपयुक्तताया प्रश्नस्तदा त्विदमेव शक्यते वक्तुं यत् संस्कृते

किञ्चिदहमपि वक्तुं लिखितुं च शक्नोमि । किन्त्वयं विचारस्तु अस्माक-मासीत् । अयं सुविचारो देवदत्तस्य मस्तिष्के बैरिष्टरमहोदयस्य च मस्तिष्के आगमिष्यति न वेति को जानाति ? निमन्त्रणं विना स्वसेवासम्प्रदानम् अशिष्टमिति निरूप्य मनसि च एकमेवाऽऽशासूत्रमवलम्ब्य प्रोक्तवान्- "निःसन्दिग्धम् उपयुक्तः पुरुषस्तु दुर्लभ एव पुनरपि अलभ्यस्तु न वर्त्तते ।"

देवदत्त उवाच "परम् एकः पन्था वर्तते ।"

"कोऽसौ ?"

"यदि भवान् कष्टं नाऽनुभवत तदा दिनद्वयं मम स्थाने पाठयतु ।"

वस्तुतः देवदत्तस्याऽयं प्रस्तावस्तु मत्कृते वरदानम् इव आसीत्, तथापि मनोगतं भावं कथमपि निगूह्य उपरिष्टान्मनसा साश्चर्यम् उक्तवान्— "किम् अहम् पाठयेयम् ?" ।

"एवम्, भवानेव पाठयतु कृपया ।"

"मन्ये भवान् उदारहृदयो वर्तते, किन्तु स बैरिष्टरमहोदयोऽपि किं भवादृश एव सहृदयो भविष्यति ?"।

"अहं बैरिष्टरमहोदयं प्रातःकाले एव उक्तवान् । स भवन्तं द्रष्टुं समीहते । अद्य सायं मया सह भवानपि तस्य गृहं चलत्विति" देवदत्त आह ।

× × × ×

बैरिस्टरमहोदयस्य गृहे प्रस्थानसमये सहसा किमपि संस्मृत्य देवदत्त उवाच—'एका वार्त्ता वर्त्तते, यदि भवान् अन्यथा न विचारयतु तदा कथयेयम् ?"

"अवश्यं कथयतु ।"

"यदि भवान् सूटवस्त्रमिदं परित्यज्य तत्र धौतवस्त्रं परिधाय चलतु ।"

"किन्तु मम पार्श्वे तु धौत न वर्त्तते ।"

"कुतश्चिद् याचित्वा गृह्णातु ।"

"याचितुं तु शक्यते किन्तु त्वं पुनः कथयिष्यसि यत् कुतश्चिद् याचित्वा शिखामपि शिरसि धारय, अथवा क्षौरं कृत्वा शिखां समुत्पादय ।"

"शिखां तु न हि किन्तु ललाटे चन्दनतिलकं कुरुष्व यतो हि तथा-विधकरणेन पुरुषः सज्जनः प्रतीयते ।"

"अहं तत्र मेघदूतं पाठयितुं गच्छामि, आहोस्वित् मन्दिरे स्तुतिपाठं कर्तुं गच्छामि ?"।

'न हि भो ! बैरिष्टरमहोदयेभ्यस्तथैव रोचिष्यते ।"

अस्तु तत्सर्वं देवदत्तस्य निर्देशानुसारमनुसृत्य अहं तेन सह बैरिष्टर-महोदयस्य गृहं गतवान् । किञ्चित्कालाऽनन्तरं बैरिष्टरमहोदयोऽस्माकं समक्षं सपागत्य मां निपुणं निरीक्षितुमारब्धवान् । अन्ततः मम धौतवस्त्रेण चन्दनटीकया च मन्ये प्रभावितो भूत्वा प्रोक्तवान्—'बालकस्तु सज्जनः प्रतीयते ।' पुनः सा मां नीत्वा वन्दितायाः समीपं तस्या अध्ययनकक्षे प्रवेश्य प्रतिनिवृत्तः । देवदत्तोऽपि तत्क्षणमेव गृहं प्रति प्रस्थितः ।

वन्दिता तु मम कल्पनातोऽप्यधिका रूपवती, निश्छला वाचाला च प्रतीयते स्म । अतएव मम किंचित् कथनात् प्रागेव सा सव्यंग्यं प्रोक्तवती—

"अहो ! अधुना भवानस्माकम् अभिनवो गृहाध्यापकः (ट्यूटर) संवृत्तः ?'।

वस्तुतः अस्य प्रश्नस्य यथावसरम् उत्तरं इदमेवासीद् यत्—"अहो ! तर्हि भवती अस्माकम् अभिनवा शिष्या सम्पन्ना !" किन्तु तस्याः सौन्दर्य-रसपाननिमग्नोऽहं क्षणं किंकर्त्तव्यविमूढ इव सहसा प्रोक्तवान्—'एवम्, अहमेव भवत्याः गृहाध्यापकः, न किन्त्वभिनवः । देवदत्तमहोदयस्य स्थाने समागतः ।'

"अनेन भवतः गृहाध्यापकत्वे कथम् आपत्तिः ?"।

"अहन्तु अस्थायिरूपेण समागतः ।"

"अस्तु तर्हि भवान् माम् अस्मात् दुःखात् मोचयतु"—सा शाकुन्तलं पुस्तकम् आलक्ष्य प्रोक्तवती ।

"किं भवती पुस्तकमेतद् दुःखरूपम् आमनति ?"।

"अपरं किम् ? कालिदासः कया आवश्यकतया वशीभूतः सन् एतावत् कठिनं दीर्घं च नाटकं लिखितवान् ?"

"मनुष्याः पठित्वा सुखम् आनन्दं चाऽनुभवेयुरिति ।'

"न हि भोः ! शतशः छात्राः शाकुन्तले अनुत्तीर्णा भवेयुरिति विचार्य तेन लिखितम् ।"

'अस्तु, अत्रस्थः कः श्लोको भवत्कृते कठिनः प्रतीयते ?''
सा एकस्मिन् श्लोके अङ्गुलिं निधाय प्रोक्तवती-'अयं श्लोकः ।'

अहं दृष्टवान्, स प्रसिद्धः श्लोक आसीत् -

''अनाघ्रातं पुष्पम् किसलयमलूनं कररुहै :

अनाविद्धं रत्नं मधु नवमनास्वादितरसम ।'' ·· इत्यादि ।

अहम् उक्तवान् —''अयं तु अत्यन्तं मनोरमः श्लोकः । एनं कृपया पठतु भवती ।''

''न हि भवान् एव पठतु ।''

मयाऽनुभूतं यत् तस्याः संस्कृतज्ञानम् अत्यल्पं वर्तते । वैरिष्टर-महोदयेन संभवतः स्वकुलसंस्कारवशात् संस्कृतभाषा बी॰ ए॰ कक्षायां तत्कृते निर्धारिता । विदेशप्रवासकारणाच्च तस्या उच्चारणमपि शुद्धं नाऽभवत् । तथाप्यहम् उक्तवान्—

''न हि भवती एव पठतु । अनेन भवत्या उच्चारणमपि शुद्धं भविष्यति ।''

सा प्राथमिककक्षाया बालिकावत् उच्चारणं कुर्वन्ती पठितुम् आरब्धवती—''अनघ्रा···तं पुष्पम ''।

अहम् उक्तवान्—''न हि भो ! 'अनाघ्रातम्' इत्युच्चार्यताम्—अनाघ्रातम् इत्येकं पद वर्तते ।''

सा पुनः पठितुम् आरब्धवती । पूर्वापेक्षया तस्या उच्चारणं शुद्धम् आसीत् 'अनाघ्रातं पुष्पम्'—इत्यादि समग्रं श्लोकं 'न जाने भोक्तारं कमिह समुपस्थास्यति विधिः' इति पर्यन्तं शनैः शनैः समाप्य सा मां पृष्टवती—

''अस्तु, तर्हि कोऽस्याऽभिप्रायः ?''।

''कालिदासः कथयति यत् शकुन्तलाया रूपं यौवनं च अनाघ्रातम् अभिनवपुष्पमिव वर्तते । तथाविधां कमनीयां कन्यां विलोक्य राज्ञो दुष्यन्तस्य मनसि अयं भावः समागतो यत् न जाने विधिः कस्य पुण्यवतः पुरुषस्य समक्षम् एनां शकुन्तलां भोग्यरूपेण उपस्थापयिष्यति ।''

''किं कन्याः केवलं भोग्या एव भवन्ति यत् खलु कालिदास एवं लिखितवान् ?''।

"न हि, रूपप्रशंसायाम् अतिशयेन वर्णितम् ।"

"अस्तु, किम् एकस्याः सुरूपायाः कन्याया उपभोगेन बहूनां पुण्यानां संचितं फलम् अधिगम्यते ? एष त्वत्यन्तं हीनो विचारः कालिदासस्य । किं भवानपि तथैव विचारयति ?"।

"अस्माकं को विचारः ? भवती 'अखण्डं पुण्यानां फलमिव' इति वाक्यं तथाविधसौन्दर्यस्योपमारूपेण जानातु ।"

"अथ कालिदासः विवाहित आसीद् अथवा सः अविवाहित आसीत् ?"।

"मन्ये विवाहितो भवेत् ।"

"किं तस्य विवाहः कन्यया सार्धं नाऽभवत् ? किं तस्य पत्नी वृद्धा आसीत् ?"।

"भवत्याः प्रश्नपत्राणि कालिदासस्य विवाहसन्दर्भे न आगमिष्यन्ति । भवती तस्य रचनायाः चर्चां करोतु ।"

"परन्तु कश्चिदपि रचयिता तदीयरचनातः पृथक्कर्त्तुं न शक्यते ।"

"यदि परीक्षायाः पूर्वं सम्पूर्णं शाकुन्तलनाटकं पठितुमिच्छति तदा पृथक् करणीयमेव ।"

"नाऽहं परीक्षां चिन्तयामि, अहन्तु कालिदासस्य दूषितां मनोवृत्तिं विचारयामि । एतस्य काव्यं, कल्पनाः, उपमाश्च मूर्खतायाः पराकाष्ठा ।"

"किं भवती कालिदासं मूर्खं कथयति ?"

"कालिदासस्तु मूर्खो वर्तते एव, तस्य प्रशंसका अपि महामूर्खाः सन्ति ।"

"अहमपि कालिदासस्य प्रशंसकः देवदत्तोऽपि प्रशंसको वर्तते ।"

"सर्वे प्रशंसका मूर्खा उलूकाश्च वर्त्तन्ते ।"

"किम् अहमपि उलूकः ?"।

सा माम् उपरिष्टाद् आरभ्य नीचैःपर्यन्तं निपुणं निरीक्ष्य प्रोक्तवती– 'तव विषये अद्य न कथयिष्यामि ।"

तस्या निरीक्षणसमये मयाऽनुभूतं यत् संभवतः सा मां धौतवस्त्र-धारिणं दृष्ट्वा मूर्खमेव मन्यते । अहं मनसि देवदत्तं धिक्कृतवान् यत्

कथमहं तस्य कथनं मत्वा धौतवस्त्रं परिधाय टीकादिकं च कृत्वा एतस्या आधुनिकायाः समक्षं प्राप्तवान । अत एव अग्रिमे दिवसे त्वहं निजं स्वाभाविकं कोट-पैन्टसमन्वितं परिधानं कृत्वा पाठयितुं गतवान् ।

अथ द्वितीये दिवसे सा मां नवीनं भिन्नं च वस्त्रं परिदधानं विलोक्य प्रोचे—"यदा भवान् पैण्टादिवस्त्रं परिदधाति तदा खलु ह्यस्तने दिवसे कथं मूर्खतापूर्णानि ग्राम्यवस्त्राणि परिधाय समागतः ? एतेषु वस्त्रेषु तु भावत्कं व्यक्तित्वम् अतितरां रोचते ।" तस्या वचनमाकर्ण्य मम मनसि हर्षस्य पारावारः समद्भूतः । यद्यपि तस्मिन् दिनेऽपि किमपि विशिष्टम् अध्ययनाऽध्यापनकार्यं नाऽभवत्, पूर्वदिवसीयः श्लोकार्थोऽपि न समाप्तः किन्तु आवयोर्मध्ये पारस्परिको वार्त्तालापः पर्याप्तं वृद्धिं गतः ।

तृतीये दिवसे तु देवदत्तो ममेच्छाविरुद्धं ग्रामात् प्रत्यागतः । किन्तु तस्मिन् दिने यदाऽहं विश्वविद्यालयं गतवान् तदा सत्वरमेव कक्षायां सर्वे सखायो मां परित आगत्य प्रोचुः यत् दिनद्वयस्याऽध्यापनाऽनुभवं कृपया कथयस्व । अहं सर्वमनुभवं पारस्परिकां वार्तां च मनोहारिरूपेण आत्मनोऽनुरूपं विधाय मित्राणां समक्षम् अतिशयोक्त्यलंकारपूर्वकम् उपस्थापितवान् । तत्सर्वमाकर्ण्य अस्माकं सखा विष्णुमित्रः कक्षायामेव मञ्चे समुत्थाय ब्रवीति—"अस्माकं ज्यौतिषज्ञानं कथयति यत् एतस्य सौभाग्ययुक्तस्याऽस्माकं सहपाठिनो विवाहः सद्य एवाऽग्रिमे वर्षे सम्पत्स्यते । भवन्तः सर्वे ब्रुवन्तु यदस्य भार्यायाः किं नामधेयं भविष्यति ?"।

सर्वे सहपाठिनस्तत्र समवेतस्वरेण तालीवादनपुरःसरम् आहुः—'वन्दिता' । तदनन्तरं सर्वे मां स्वस्कन्धेषु समुत्थाप्य प्रसन्नताम् प्राकटयन् ।

अयि पाठकाः ! किं भवन्तोऽपि मम सहपाठिनां विचारेण सहमताः वर्त्तध्वे ? श्रूयताम्, अग्रिमे वर्षे वन्दिता वधूभावं तु प्राप्तवती किन्तु न मदीया पत्नी प्रत्युत देवदत्तस्य पत्नी सञ्जाता ।

दुर्घटना इयमभूत् यद् अग्रिमे वर्षे एम० ए० परीक्षाफलस्य घोषणासमकालमेव श्रीदेवदत्तः प्रतियोगिपरीक्षायामपि (आई० ए० एस०) साफल्यम् अवाप्तवान् । यद्यपि देवदत्तस्य ग्राम्यसंस्कारः, शिखाबन्धनं धौतपरिधानं च पाश्चात्त्यवेश-विन्यास-विभूषितस्य श्रीसीताराममिश्रस्य वन्दितायाश्च कृते असहजं विचित्रं चासीत् किन्तु मन्ये तस्य प्रतियोगिपरीक्षायां सफलता एव एतत्सर्वमवरोधं दूरीकृत्य श्रीसीतारामम‍िश्रस्य मनसि कन्यादानस्य प्रेरणां समुत्पादितवती ।

सम्प्रति देवदत्तो वन्दितया समं मधुयामिनीयात्रार्थं प्रस्थितः।

अहन्तु वन्दितां ध्यात्वा कालिदासस्य तमेव श्लोकं पुनः पुनः चिन्तयन् चतुर्थचरणे किंचित्परिवर्त्तनपूर्वकं पठितुमारब्धवान्—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघम्,
विजाने भोक्तारं यमिह समुपास्थाद् विधिरहो !॥

• • •

# बहुविलम्बः कृतः

भित्तौ स्थापिता घटिका टिक्-टिक् कुर्वाणा स्वकीयाम् उपस्थितिं बोधयति। उपरिस्थितं विद्युद्व्यजनमपि सरसरायमाणं शब्दं करोति। मञ्चे स्थितानि पत्र-पत्रिकाणाम् अनावृतानि पत्राणि फरफरायमाणानि ध्वनिं जनयन्ति। परं केवलम् आवामेव निर्जीववत् निःशब्दौ भवावः।

सोफासने समुपविष्टस्य तस्य पञ्चाशत् मिनटेभ्यो-ऽप्यधिकः समयो व्यतीतः। तस्य हस्तमञ्जूषा (ब्रीफकेस) साम्प्रतमपि तस्य पादयोः समीप एव विराजते। अहं तं सहजं भवितुम् उक्तवती किन्तु स निःशब्दो धृष्टश्च तिष्ठत्येव। साम्प्रतं तु तस्य धृष्टतां विलोक्य मम मनसि कश्चिद् आक्रोश इव उत्पद्यते। अयं स एव मनीषी वर्त्तते यं कदाचिद् अहं देवतावत् पूजयामि स्म। स्वप्नेऽपि च चिन्तयामि स्म। यस्य चित्रं विलोक्याऽहं स्वकीयां दिनचर्यां प्रारभे स्म, चित्रमेव च विलोक्य निशि शयनम् अकार्षम्।

"स्नानं कृत्वा वस्त्राणि परिधत्स्व तदनन्तरं सहैव भोजनं कुर्वहे" अहम् उक्तवती।

स स्वकीयकरे निबद्धां घटिकामालोक्य आलस्ययुक्तेन स्वरेण कथयति "नाऽहमत्र स्थातुमिच्छामि, अहन्तु त्वां नेतुं समागतः"।

अहं मनस्येव तस्योपहासं करोमि। तस्य वाक्यस्य किमप्युत्तरं न ददामि। केवलं तदभिमुखं पश्याम्येव। स ईषत्कुपित इव सोफासने पृष्ठं कृत्वा निषीदति।

"जलं पाययितुं शक्नोषि ?" स उद्विग्नः कथयति। अहं श्यामाम् आहूय कथयामि - 'एनं जलं पाययस्व"।

मम तत्परा भृत्या श्यामा सद्य एव एकस्मिन् ग्लासपात्रे जलमानयति। स जलपात्रं नीत्वा सम्पूर्णमेव जलमविरतं पीत्वा ग्लासपात्रं रिक्तं कुरुते। जलं पीत्वा च स किञ्चिद् अश्रान्त इव लक्ष्यते। तस्य नयने आरक्ते भवतः। न जाने परिश्रमवशात्, निदाघजन्यतापवशात्, आहोस्वित् ....।

अहम् उपविष्टा सती एकाम्पत्रिकाम् उत्थाप्य तदध्ययनस्य उपक्रमं करोमि। स माम् एव निरन्तरं पश्यति। तदन्तरं हस्तमञ्जूषामुद्घाटय ततो वस्त्राणि निःसारयति। मम हस्ते यद्यपि एका पत्रिका वर्त्तते किन्तु मम सम्पूर्णं ध्यानं तस्यैवोपरि वर्त्तते। स अत्यन्तं श्रान्तो निराशः पूर्णतया भग्नश्च प्रतिभाति। एकस्मिन् क्षणे मम मनस्ययं विचारः समायाति यदस्य सम्पूर्णं श्रान्तत्वं भग्नत्वं नैराश्यं च गृह्णीयाम्; किन्तु विगतानां संवत्सराणां स्मृतयः सर्पवत् मध्ये आगत्य व्याघातं कुर्वन्ति, येनाऽहं मनीषं घृणाभावेनैव द्रष्टुं पारये, न तु स्नेहसिक्तेन हृदयेन।

स वस्त्राणि निःसार्यं ममाभिमुखं प्रश्नपरिपूर्णेन दृष्टिभावेनाऽनवरतं पश्यति। अहमपि जानामि यत् स मामेव विलोकयते किन्तु पुनरप्यहं पत्रिकापठनस्यैवाऽभिनयं करोमि।

"स्नानागारः कुत्र ?" मनीषः सहसा पृच्छति।

अहम् उत्तरदिशि अङ्गुल्या निर्दिशन्ती प्राह—"तत्र"।

तदाकर्ण्य स स्नानागारमभि शनैः शनैः प्रयाति। अहं तस्मिन् गते पत्रिकाम् एकतः कृत्वा सोफासने रक्षामि। मम चित्तं चीत्कारमिव चिकीर्षति। अहं रोदितुमिच्छामि किन्तु न रोदिमि। अन्तस्तले यथा किंचिद् उद्विजते—ज्वलतीव च। अहं दीर्घं निःश्वस्य अन्तर्हृदयं स्थितं मनीषं कथयामि—'त्वया बहुविलम्बः कृतः। साम्प्रतं तु मम जीवनस्य रूपमेव

परिवर्त्तितम् मार्गः परिवर्त्तितः लक्ष्यम्परिवर्त्तितम्, जीवनधारैवाऽन्यथाऽन्यत्र च प्रवाहिताऽभवत् । अहो ! तदा कथं न त्वया ध्यानं दत्तं मनीष ! यदा मत्कृते तवाऽऽवश्यकता बभूव ? यदा चाऽहम् आशाविश्वासयुक्ताभ्यां नयनाभ्यां त्वाम् अहर्निशं पश्यामि स्म'' ।

× × × ×

तदानीन्तनमेतद् वृत्तान्तं यदा आवाम् अर्थात् अहं मनीषश्च कर्णपुरे नगरे न्यवसाव । आवयोर्गृहम् अन्योन्याभिमुखमेवाऽऽसीत् । आवयोः परिवार-योश्च मध्ये प्रगाढमित्रताऽभवत् । तदानीम् आवयोः पारस्परिकां मित्रतां निरूप्य परिवारस्था जना इदमपि विचारयन्ति स्म यत् प्राप्ते समये एतयोर्विवाहः परस्परं करणीयः । आवामपि इदम् अजानाव परस्परं च स्नेहसिक्ताभ्यां नयनाभ्याम् अपश्याव । तदानीं मनीषो देहरादूनस्थे विद्यालये पठति स्म । अहञ्च कर्णपुरे एव कन्यामहाविद्यालये पठामि स्म । मनीषस्तु दार्शनिक इवाऽभवत् । स लेखादिकमपि लिखति स्म यदा चाऽहं रङ्गमञ्चस्य कलाकाररूपेण स्वस्मिन् नगरे किमपि यशः प्राप्तवती । कश्चिदपि विरोधाभासो विसंगतिर्वा आवयोर्जीवने प्रायः नैव बभूव ।

ग्रीष्मावकाशे, शीतावकाशे, दीपमालिकाद्यवकाशे च अहं मनीषस्य गृहागमनस्य प्रतीक्षां कुर्वाणा सदैव तच्चिन्तननिरता अभवम् । यदा च स देहरादूनात् आगच्छति स्म तदा त्वावां तथा परस्परं प्रागढतया सस्नेहं सोत्साहं सोत्सुकं च मिलितवन्तौ यत् सत्सर्वं दृश्यमेव तदानीमद्भुत-मेवाऽभवत् ।

तदानीन्तनमेकं दृश्यं तु साम्प्रतमपि न शक्यते विस्मर्त्तुं मया । एकदा मनीषः स्वकीयजनन्या पितामह्या च समम् अस्माकं गेहे समागत आसीत् । सर्वे वार्त्तायां व्यस्ता अभूवन् । स मामनुरसरन् भोजनालय-पर्यन्तं शनैः शनैः समायातः । अहं तु चायनिर्माणकार्ये व्यस्ता जाता । तदैवाऽकस्माद् अहं कस्यचिदोष्ठस्य स्पर्शं स्वस्कन्धस्य पार्श्वे गलोपरि अनुभूतवती । तप्तं जलं मम हस्तयोरुपरि पतदिव समजायत । अह चकिता सती यदा पृष्ठे दृष्टवती तदा मनीषमवलोक्य स्तब्धेव सञ्जाता । कस्याऽपि पुरुषस्य तथाविधः स्निग्धस्तप्तश्च स्पर्शः स प्रथम एवाऽऽसीत् । तदनन्तरमहं ज्ञातवती यत मनीषोऽपि मयि अतिशय स्नेहं कुरुते । स मां पत्नीरूपेण प्राप्तुमिच्छति स्म । तस्य माताऽपि बहुवारं मदीयमातर वधूरूपेण मां स्वीकर्त्तुम् उक्तवती । अहं नितरां प्रसन्ना आसम् यत् मम स्वप्नस्य संसारः स्वर्णिमो वर्त्तते । मनीषस्य अध्ययनकार्यं वर्षद्वयं यावत् अवशिष्टमासीत् । वर्षद्वयाऽनन्तरं त्वावयोः स्वप्नानां संसारो यथार्थतां प्राप्स्यत्येव ।

अहं व्यक्तिगतस्वतन्त्रतायाः पक्षधरा अभूवम् । महाविद्यालये चाऽध्ययनकाले एव मम मित्रता बहुभिः छात्रैः छात्राभिश्च समम् आसीत । रङ्गमञ्चेषु रुचिवशाद् अभिनयकारणाच्च मम गृहे गमनाऽऽगमनं प्रायः विलम्बेन भवति स्म । परं मदीयपितृभ्याम् इदं सर्वं न रोचते स्म । बहुवारं ते मां कथयन्ति स्म यद् एतावदधिकं स्वच्छन्दतापूर्वकं न मया गन्तव्यं नाटकादीनां पूर्वाभ्यासे च समयो न हापनीयः । किन्तु मया विचारितं यद् यदि मयि कश्चन दोषो न वर्त्तते तदा क्वचिदपि गमनाऽऽगमने का हानिः ? ।

एकदा कस्मिंश्चित् सांस्कृतिककार्यक्रमे स्वसखिभिः सह गतवती । कार्यक्रमस्य समाप्तिर्द्वादशवादनकाले रात्रौ समभवत् । बुभुक्षा तीव्रतया प्रवर्त्तते स्म । तदानीमेवाऽस्माकं सख्याः सीमायाः कश्चित् सखा तत्रैवाऽकस्मात् दृष्टिपथमागतो येन सार्धं द्वावन्यावपि सखायौ बभूवतुः । तेषां समीपे कारयानमासीत् । तेनोक्तं यत् पूर्वमत्रैव समीपस्थे भोजनालये भोजनं कर्त्तव्यं तदनन्तरं च गृहं प्रस्थातव्यम् । कारयानं तु अस्माकं संख्याः सुषमायाः समीपेऽपि बभूव । एवं सर्वे वयं भोजनालये भोजनं विधाय रात्रौ सार्धैकवादनपर्यन्तं स्वकीयगृहम्प्राप्तवन्तः ।

यदाऽहं स्वशयनकक्षम्प्रति गच्छामि स्म तदैव मयाऽनुभूतं यत् मम पितरौ ज्येष्ठस्वसा च स्वकक्षे शनैः शनैः कामपि मद्विषयिकीमेव वार्त्तां प्रकुर्वन्ति स्म । मां स्वकक्षे प्रविशन्तीं विलोक्य मम पिता अवादीत्— "नमिते ! इह समागच्छ" ।

अहं वातावरणस्य गम्भीरतां किञ्चिदनुभूय स्तब्धेव भूत्वा पितुः समक्षं गतवती । अहं तेषां चक्षुषि सावधानतया पश्यामि स्म--भयं विना, स्तब्धतां विना, दोषानुभूतिं विना, सरलतया, सत्यसंकल्पतया, सहजतया च ।

मदीया माता मम वस्त्राणि निरूपयति स्म । इमानि वस्त्राणि प्रायः तथाविधान्याधुनिकानि बभूवुः यथा सम्पूर्णमङ्गं कथमपि नाऽऽच्छादयितुं समर्थानि आसन् । "श्वस्तनात् दिवसाद् एतानि वस्त्राणि न परिधास्यसि, केवलं शाटिकावस्त्रमेव परिधातव्याम्" इति मम मातुः रोषपूर्णः स्वरः समुत्थितः । परमहं तां तथा पश्यामि यथा तासां परिहासं करोमि । कुपितः पिता प्रोक्तवान्--"कुत आयासि ?" ।

"भोजनालयात्···भोजनं कृत्वा"--अहं स्वकीयां केशराशिं किञ्चित् पृष्ठतः कृत्वा प्रत्युवाच ।

"हुँह···" जनक आह। पुनः मदभिमुखो भूत्वा पृष्टवान्--"त्वया समम् अन्ये के आसन् ?"।

"सख्यः आसन्···सीमा-सुषमादयः। एकस्याः सख्याः पुरुषमित्राण्यपि तत्रैव संगतानि।" अहं सहजतया सौम्येन प्रोक्तवती।

"श्वस्तनाद् दिवसात् त्वं केनाऽपि कयाऽपि वा समं क्वचिदपि न गन्तासि। केवलं महाविद्यालयाद् गृहं गृहाच्च महाविद्यालयमेव गन्तव्यम् भविष्यति,···अवगतं त्वया ?" इति पितुर्वचनमाकर्ण्याऽहम् उद्विग्ना स्तब्धा च सञ्जाता।

"एतदसम्भवं पितः ! कथमेतत् सम्भाव्यते ? साम्प्रतमहं ज्येष्ठतां प्राप्तवती···साधुताम् असाधुतां हानिं लाभं च पूर्णतया वेद्मि·· तथा कठोरतां कर्त्तुं न शक्नोति भवान् " इत्यहं साक्रोशम् उच्चैः प्रोक्तवती।

"साम्प्रतं त्वं स्वविष्टरे गच्छ। ममाऽयम् अन्तिमो निर्णयः" इति जनकोऽपि साक्रोशम् उच्चैः प्रत्युवाच।

अहं कुपिता सती आग्नेयाभ्याम् नेत्राभ्याम् पितरौ ज्येष्ठस्वसारं च व्यलोकयम् अथ च वस्त्रपरिवर्त्तनमपि अकृत्वा तथैव विष्टरे निपत्य समस्तायां निशायामनवरतं रोदनमेव कृतवती।

मम माता ज्येष्ठस्वसा च तस्मिन्नेव कक्षे वार्त्ता कुर्वन्त्यौ आसाते--"इयम्पूर्णतया विकृतस्वभावा प्रवर्त्तते··कस्मिंश्चिद्दिवसेऽस्माकं नासिकां छेदयिष्यति · सेठनायाः सुतावत्··या खलु गृहात् पलायितवती···" इत्यादि। किन्तु पितृमहोदयः शान्ता आसन् ते केवलं निर्णयं कुर्वन्ति–किमपि वदन्ति न हि।

अहं प्रातरुत्थितवती। स्नानादिकं कृत्वा यदा वेलबाटम-वस्त्रं शर्टवस्त्रं च परिधाय बहिरागता तदा मम जननी साक्रोशम् उक्तवती--'शाटिकां धारय। स्वकीयानि एवं विधानि वस्त्राणि अपनयस्व।" अहमपि कुपिता प्रत्युवाच –"न परिधास्यामि"।

"तदा त्वं गृहाद् बहिरपि न गमिष्यसि"—सा दृढस्वरेण माम् उक्तवती। एतस्मिन्नेवान्तरे दूरभाषस्य घटिकानादः समजायत। अहं दूरभाषयन्त्रम् उदस्थापयम्। तत्र 'वाटिका' नामधेयायाः सांस्कृतिक-संस्थायाः निर्देशकः श्रीकान्तकुशवाहा आसीत् स मां पृष्टवान्--"किं त्वं 'वंशीनाद' नाम्नि नाटके 'वसुन्धरा' पात्रस्य अभिनयं करिष्यसि ?" अहं सोत्साहम् प्रत्युवाच - "अवश्यम्,···अवश्यं करिष्यामि"।

"पूर्वाभ्यासकार्यार्थं त्वं कदा समागमिष्यसि नाट्स्यालेखः (स्क्रिप्ट) प्रायः पूर्णः सज्जश्च वर्त्तते। परश्वस्तनाद् दिवसात् पूर्वाभ्यास..." इत्यादि वाक्यं स कथयति स्म अहञ्चाह्लादितमानसा सर्वं शृणोमि स्म – इति तस्मिन्नेव काले मम जनकस्तत्र समागत्य स्वकीयदृढहस्तेन दूरभाषयन्त्रं मदीयहस्ताद् आकृष्य प्रोक्तुमारभत् – "अहो! दुःखम्...महाशय! नमिता इमां पात्रतां नाट्ये निर्वाहयितुम् अक्षमा वर्त्तते...यतो हि सा बहिर्गच्छति" इति कथयन् स दूरभाषयन्त्रं स्थगितवान्। अहं तत्र स्तब्धा सती केवलं पश्यन्त्येव समुपस्थितवती।

प्रायः प्रत्यहमेव मम द्वित्राणि पत्राणि आगच्छन्ति स्म। किन्तु तद्दिवसात् मम पत्राण्यपि प्राप्तुमहम् असमर्था सञ्जाता। मम दूरभाषस्य उत्तरमपि मत्समक्षमेव अन्यथारूपेण प्रदीयते स्म। अहञ्च तत्सर्वं तत्र द्रष्टुं, श्रोतुम्, अनुभवितुं च विवशा प्रत्यपद्यम्।

तथाविधैरपमानभावैरहम् अत्यन्तं भग्नहृदया सर्वथा मृतमनोरथा च सञ्जाता। एतेष्वेव दिनेषु एकदा मनीषः समागतः। अहं तत्समक्षम् अत्यन्तं परिदेवयाञ्चकार –"मनीष! कृपया मया समं विवाहं कुरुष्व, मां याचस्व, अहमत्र निरन्तरं व्याकुला समुद्विग्ना च भवामि। त्वमेव मम साम्प्रतम् आधारः। जीवयस्व माम्...आश्रयं देहि...साहचर्यम्प्रापय..." इत्याद्युच्चारयन्ती तस्य हस्तं गृहीत्वा तारस्वरेण सहाहाकारमहं रोदितुमारब्धवती।

मम वचांसि समाकर्ण्य स निजचक्षुषी नीचैः कृत्वा कापुरुषः सन् एवमब्रवीत् –"न हि नमिते! अधुना तु विवाहविषये विचारयितुमपि न शक्यते" पुनः किञ्चिद् विरम्य ब्रवीति –'त्वं केनाऽप्यन्येन सह विवाहं विरचयस्व।"

तस्य वचनानि तदा वज्रतुल्यानि मम हृदयं विदीर्य प्रविष्टानि। मम आत्माऽपि महादुःखेन व्याकुलीभूतः। कथं स एवं वक्तुं साहसमकार्षीत्? अहो! मम स्नेहं, मम याच्ञां, मम प्रणयनिवेदनं, सर्वमेव स धूलिसात्कृत्य कथं निरपेक्षः प्रावर्त्तत?"।

बहु दिनानि यावत्तु अहं प्रस्तर इवाऽभवम्। पुनः शनैः शनैः पित्रोरनुसारमेव स्वात्मानं निर्मातुं प्रारब्धवती। शाटिकापरिधानं गृहीतवती। केशाः प्रवर्धिताः। सखायो दूरीभूताः। शुष्का नीरसा च जीवनचर्या प्रारब्धा – अनुरागविहीना, ममत्वविहीना, स्नेहपराङ्मुखा, अन्तर्मुखनिमग्ना च। माता मां प्राशासनिकपदाधिकारिरूपेण (आई० ए० एस०) निर्मातुमिच्छति

स्म । अत एव अन्यं कमपि पन्थानमनवलोक्य मयाऽपि प्रतियोगिपरीक्षायामेव सर्वथा अनन्यमानसा सती प्रयत्नं कर्त्तुं प्रारब्धम् ।

परिणामतः साम्प्रतमहम् एकः प्राशासनिकः अधिकारी कु० नमिता शुक्ला (आई० ए० एस ) भवामि । मम पार्श्वे एकं सुन्दरं भवनं कारयानं, बैङ्केषु च पर्याप्तं धनं विद्यते । साम्प्रतमहं पूर्णतया स्वतन्त्रा समर्था च भवामि । कस्यचिदपि पारवश्यं न भजामि । परम् एतत्सर्वं व्यतीतं घटनाचक्रम् अतीव संघर्षपूर्णम् आसीत् - अतिशयमेव पीडादायकम् ।

जानासि मनीष ! एतस्मिन् विकटसंघर्षे मम समग्रा स्निग्धता शुष्कतां गता – दीपस्तु तस्मिन्नेव दिने व्युञ्झितो यस्मिन् दिने त्वं मत्तः पराङ्मुखः संवृत्तः । सम्प्रति न केनचिदपि सममहं प्रेम करोमि प्रत्युत सर्वत्र दयां दर्शयामि । प्रत्यहम् अनेके पुरुषाः सम्पर्के समायान्ति परन्तु कमपि पुरुषं प्रति प्रेमभावो न प्रवहति । तम् ऋषिमोहननामकं पुरुषं प्रत्यपि न हि यः मह्यम्पर्याप्तिमाश्रयं प्रदत्तवान्, संघर्षे प्रेरणां प्रदत्तवान्, आत्मीयतां प्राकटयत् तथा च विवाहस्य बहुवारमाग्रहमपि कृतवान् ।

साम्प्रतमहम् एकः अनुशासनप्रियः आई. ए. एस. अधिकारी 'कुमारी नमिता शुक्ला' भवामि । अहं कस्याऽपि 'नमि' (मनीषेण प्रदत्तम्प्रियं संक्षिप्तं सम्बोधनमेतत्) नाऽस्मि । प्रेम्णः स्रोतो नाऽस्मि, कोमलता-प्रतीका नारी नाऽस्मि, प्रत्युत केवलं 'नमिता' भवामि कुमारी नमिता शुक्ला ।

× × × ×

घटिका तथैव तस्मिन्नेव तारतम्ये टिक-टिक शब्दं कुर्वाणा प्रवर्धते । साम्प्रतं मनीषः स्नानागारात् धवलं कुर्त्ता-पैजामावस्त्रं परिधाय निःसरन् दृश्यते । अहं सावधानम् अवलोकयामि । शनैः शनैः समागत्य तस्मिन्नेव सोफासने पुनरुपविष्टवान् ।

प्रतीयते यत्कालस्य प्रवाहेण समं सोऽपि क्लान्ततां सम्प्राप्तः । तस्य श्यामाः शिरोरुहाः यत्र कुत्रचित् धवलतां भजन्ते । अङ्गेष्वपि तथा चापल्यं न वर्त्तते । स किञ्चिद् दुर्बलः श्रान्तश्च प्रतीयते । अहन्तु निश्चितरूपेण तस्यापेक्षया अधिका स्वस्था, प्रफुल्ला, प्रसन्ना च भवामि ।

तस्य चक्षुषी मदीयचक्षुर्भ्यां मिलतः । तस्य नयनयोरेकं निवेदनं, विद्यते, व्यग्रता वर्त्तते, पिपासा च प्रतिभासते । अहं तत्सर्वमनुभवामि किन्तु चातुर्येण स्वकीयां दृष्टिम् अन्यतः साधयामि ।

"स्वसॄणां विवाहः सम्पन्नः। ततः प्रभृति पितरौ अत्यन्तमेकाकि-भावमनुभवत." इति स कथयति। तस्य कथनस्याऽहं तात्पर्यम् अवगच्छामि। तदर्थमेव तु मम पितरौ ज्येष्ठस्वसा च शतशः समागत्य प्रतिनिवृत्ताः।

अहं किञ्चित् स्मये। मम चक्षुषोः समक्षे यातनायाः, उद्विग्नतायाः, निराशायाश्च तानि क्षणानि परिभ्रमन्ति येष्वहं निरन्तरं धूमायिता, प्रज्वलिता, विभग्नीभूता, परिमृदिता च।

मनीषस्तैः प्रेरितमन्तिमम् अस्त्रं वर्त्तते। परन्त्वहं सा भावुकताग्रस्ता नमिता साम्प्रतं नाऽस्मि। अहन्तु एकः प्रशासनाधिकारी नमिता (आई. ए. एस्.) भवामि। आत्मनो विजयमिव विलोक्य मम वदने एका विषाक्तता कुटिला च मन्दस्मिति समेधतेतमाम्।

मनीषस्योपरि सम्प्रति क्वचिद् दयाभावोऽपि समायाति। पुनरपि आत्मानं कठोरं कृत्वा कथयामि "त्वम् अन्यत्र कुत्रचिद् विवाहं कुरुष्व। (इदमेव वाक्यं स कदाचित् मदर्थं प्रयुक्तवान्) मम तु तेषु मार्गेषु प्रत्यावर्त्तनं सम्भवं नाऽस्ति। मनीष ! त्वया बहुविलम्बः कृतः।"

मम तद्वचनं समाकर्ण्य प्रतीयते यत् स रोदिष्यति, मम पादयोः पतिष्यति, हस्ताञ्जलिं च कृत्वा कथयिष्यति—"नमिते ! एवं कठोरहृदया मा भव, स्वकीयं प्रथमं स्नेहं स्मर, उभयोर्गृहं मा विनाशय, प्रत्यावर्त्तस्व, अहं तवात्मानं कदापि न व्याहनिष्यामि, यथेच्छं कुरुष्व—अभिनयम्, आदर्शनम् (माडलिंग)) परिभ्रमणं वा—न कोऽपि त्वाम् अवरोत्स्यति—किन्तु चल, चल मया सार्धम् अधुनैव !"।

सम्भवतः स कथयत्येव सर्वं तत्, परन्तु मौनाभ्यां नयनाभ्याम्। अहं तस्य भाषाम् अवगच्छामि। तस्य वेदनापूर्णानि नयनानि तदेव कथयन्ति यदेतत् सर्वमहं विचारयामि।

स स्वकीयहस्तमञ्जूषाम् (ब्रीफकेस) उत्थाप्य गन्तुं समीहते। "ममेयम् अन्तिमा प्रार्थना विद्यते नमिते !" इति वाक्यं स बाष्पाभिभूतेन कण्ठेन कठिनतयैव कथयति।

अहं जडवत् तिष्ठामि। अहं तं रोद्धुमपि असमर्था भवामि। कण्ठमपि अवरुद्धमिव मम। अहं प्रयासं करोमि आत्मानम् उत्थापयितुम्, तम् आश्लिष्य अवरोद्धुम्, परन्तु स्पन्दनेऽपि असमर्था भवामि। केवलम् अस्फुटाः शब्दाः

कथमपि ओष्ठाद् बहिरागताः—"मनीष ! त्वया बहुविलम्बः कृतः…" किन्तु स तु शनैः शनैः गृहद्वारात् निष्क्रान्त एव ।

मम ते अर्थहीनाः शब्दा रिक्तताभावेन सह वायुमण्डले विलीयन्ते । अहं पुनरेकाकिनी एव संवृत्ता । मया समं मम स्वोपार्जितश्छद्मः प्राशासनिकाधिकारिभावो वर्त्तते, विक्षतं हृदयं वर्त्तते, एकान्तता वर्त्तते, भग्नता वर्त्तते, रूक्षता च वर्त्तते । अन्तस्तले समुद्रोर्मिरिव चिन्तनौघो वर्धतेतमाम् । अनिच्छन्नपि च मम चक्षुषोर्बाष्पप्रवाहः अविरलं प्रवहन्निव विभाति ॥

•••

# सौमनस्यातिरेकः

साम्प्रतमेवाऽहं ग्रामस्य समस्या अधिकृत्य पत्रिकायाम् एकं सुन्दरं लेखम्पठितवान् । लेखमधीत्य प्रतीयते यद् ग्रामेषु प्रायः सर्वत्र शान्तिः प्रदूषणविहीनता हरितक्रान्तिः श्वेतक्रान्तिश्च वर्धतेतमाम् । ग्रामेषु काचिद् विशिष्टा समस्या न वर्त्तते । केवलं कश्चिद् जनसंख्याविस्फोट एव वर्त्तते सोऽपि च ग्रामपञ्चायतानां जागरूकताकारणेन शनैः शनैः समाप्तो भविष्यति ।

लेखमधीत्य मम मनसि विचारः संवृत्तो यत् किं ग्रामविषयकः स लेखो वास्तविको वर्त्तते ? किं साम्प्रतिका लेखका लेखनकार्ये न्यायं कुर्वन्ति ? किं ते ग्रामेषु सर्वथा शान्तिं सौमनस्यं सौन्दर्यमेव च पश्यन्ति ? किं तत्र काऽपि समस्या वस्तुतः न वर्त्तते ? किं तत्रस्था मानवा रागद्वेषविहीनाः परोपकारिण सन्तो देवताभावमापन्नाः सात्त्विका दयालवश्चैव वर्त्तन्ते ? ......इत्येवं विचारयत्येव मयि स्वगृहस्य कपाटे खट्-खट् ध्वनिरश्रूयत ।

"पप्पू ! पश्य कोऽस्ति ?" इत्यहं कुर्सीसमारूढ एव स्वतनयं प्रोक्तवान् ।

"एवम्" इत्युच्चार्य मम पुत्रो द्वारमुदघाटयत् । द्वारोद्घाटनसमकाल-मेव स 'अरे ! बिरजू-शिल्पी (मिस्त्री) त्वम् !" इत्यवादीत् ।

"विरजू" नामधेयमाकर्ण्य अहमपि द्वारसमीपं गतवान् । सत्यम्, स तु मदीयग्रामस्य निवासी बिरजूशिल्पी एव आसीत् । स सहजतया स्वकीयौ हस्तौ माम् अभिलक्ष्य अभिवादनार्थं सम्मेलितवान् ।

अहं विरजूकृतस्य नमस्कारस्य किमप्युत्तरम् अदाय्य ततः पूर्वमेव मम दृष्टिस्तस्य वामनयनोपरि गता यत्र तूलिकां निधाय श्वेतपटिटका निबद्धा बभूव ।

अहम् आश्चर्यचकित सञ्जातः परन्तु द्वाःस्थ एव किमपि प्रष्टव्यं नोचितम् इति विचार्य तं गृहाभ्यन्तरे समागन्तुम् उक्तवान् ।

विरजू सन्तुलितचरणाभ्यां शनैः-शनैः चलति स्म । तस्य शरीरमपि पूर्वापेक्षया पर्याप्तं दुर्बलमदृश्यत । स खट्वायां सतर्कः समुपविष्टवान् । अहमपि तत्समक्षमेव कुर्सीमाकृष्य समुपविष्टवान् ।

"किं भो ! विरजू ! ...... कः समाचारः ? तव नयने किमिदं सञ्जातम् ?" ।

"भ्रातः ! न किमपि विशिष्टम् । पूर्वं तु भवता स्वगृहस्य समाचारः श्रोतव्यः, निजनयनस्य विषये पश्चात् कथयिष्यामि इति बिरजू मां स्वनेत्र-विषयकवृत्तान्तप्रश्नात् प्रायः निवारयन्निव पुनरग्रे ब्रवीति—"भवदीयौ पितरौ स्वस्थौ वर्त्तेते । अनावृष्टेराशङ्का बभूव किन्तु दिनद्वयात् पूर्वं ग्रामे वृष्टिः सञ्जाता अत एव कृषिविषयिकी चिन्ता परिसमाप्ता ।'

"न्यायालये वादविषयये काऽपि सूचना त्वया प्राप्ता " अहम्पृष्टवान् ।

"तत्सर्वमपि प्रायः समीचीनमेव । अग्रिममासस्य पञ्चदशदिनाङ्के पुनः वादश्रवणं निर्धारितं वर्त्तते ।" बिरजू प्रत्युवाच ।

"अहन्तु स्वग्रामवासिभिः बहुसन्त्रस्तो भवामि । व्यर्थमेव वाद-विवादसमुत्थापने न्यायालयगमने च न जाने ते कथं सुखं लभन्ते । त्वमेव पश्य, मम ग्रामगृहं प्रायः निर्मितमेवाऽभवत् । पञ्चसप्ततिः प्रतिशतं कार्यमपि समाप्तं सञ्जातम् । परन्तु प्रतिवेशी श्रीबुधरामः, यः खलु अस्माकं पितृ-व्यपरिवारस्थो वर्त्तते, न्यायालयात् स्थगनादेशमानीय निर्माणकार्येऽवरोधं कृतवान् एव । स कथयति स्म यत् स्वपुत्रीविवाहम् एकवर्षपर्यन्तं स्थगितं करिष्यामि परन्तु गृहनिर्माणकार्यं तु रोधयिष्याम्येव । त्वमेव वद ! ममैव

भूमि ममैव रूप्याणि किन्तु स मम गृहं निर्मितं भवितुं द्रष्टुं न शक्नोति । मम गृहं तु तस्य गृहस्य पृष्ठभागे निर्मीयते स्म, न तु तद्गृहाऽभिमुखम्, पुनरपि स न जाने केन कारणेन मनसि व्यर्थमेव वैमनस्यं मन्यते ।" अहम् उक्तवान् ।

एतस्मिन्नेवाऽन्तरे गृहाऽभ्यन्तरात् पकौड़ीसहितं चायं समागतम् । चायपानसमकालमेव ग्रामस्य गृहस्य च वार्त्ता अपि प्रवर्त्तन्ते स्म परन्तु मया बिरजूमुखे नैव सा स्मितिः नैव सा तेजस्विता नैव च तत् चापल्यम् अभिलक्षितं यत् सर्वं तस्य स्वाभाविकं लक्षणमासीत् ।

रिक्तप्लेटपात्राणां चायपात्राणां चाऽपसारणाऽनन्तरम् अहं तं पुनः पृष्टवान् – 'अस्तु, ब्रूहि स्वकीयं नेत्रविषयकं वृत्तान्तम् ?' ।

"भ्रातः ! किं कथयेयम्, किं च न कथयेयम् ? कथयन्नपि हृदयं विदीर्यते - अकथयन्नपि च हृदयं न शाम्यति ' इत्युच्चारयतो बिरजूशिल्पिनो दक्षिणनेत्रात् अश्रूणि निपतितुं प्रारभन्त । स पुनराह—'बहुत्र भ्रमणं कृत्वा इह नगरे त्वत्समीपमुपागतोऽस्मि । सम्भवतः इह नगरस्थिते औषधालये एव मम नेत्रं स्वस्थं सम्भवेत् । अनेके जनाः अत्र स्थितं चिकित्सकमपि प्रशंसितवन्तः ।"

"किन्तु बिरजू ! तव नयने किमिदं संवृत्तं यत् स्वस्थतां न गच्छति ?" अहं तस्य मुखमण्डले स्थितं महानैराश्यं निरूप्य समुद्विग्न सञ्जात ।

"भ्रातः ! असौ अस्माकं पितृव्यसम्बन्धेन भ्राता वर्त्तते नु, सरूप, स एव मया समं महाविश्वासघातं कृतवान् ।" बिरजू स्वकीयकरतले तम्बाकूमर्दनं कृत्वा ओष्ठस्याऽधस्तने भागे च तं निवेश्य पुनरेव वक्तुं प्रारब्धवान् –"यदा त्रिमासपूर्वं ग्रामगृहे समागतस्तदा तु भवता समम् अस्माकं सम्मेलनमभवदेव । तदानीमहं स्वस्थ आसम् । ततः पूर्वं तु भवतां गृहस्य निर्माणमपि मयैव सम्पादितम् । एतन्मध्य एव अस्माकं सरूपेण सार्धम् एको युद्धविवादो (फौजदारी मुकदमा) न्यायालये चलति स्म । यदा तेन ज्ञातं यत् अस्मिन् विवादे स महदर्थदण्डपूर्वकं कारागारवासेन दण्डितो भविष्यति तदा मत्समीपमागत्य परिदेवयाञ्चकार । अहमपि च निजज्ञातिकारणात् रुधिरसम्बन्धं चाध्याय किमस्मिन् चतुर्दिवसात्मके जीवने विवादः ? व्यर्थं विवादवर्धापने वा को लाभः ? इत्यनुचिन्त्य तूष्णीम् अभूवम् ।

"किं त्वया सामञ्जस्यं (सुलह-समझौता) स्थापितं कृतम् ?' ।

"एवं भ्रातः !" ।

"ततः किमभवत् ?" अहम् उत्सुकः पृष्टवान् ।

'पुनः सामञ्जस्य-स्थापनाऽन्तरं तु आवयोर्मध्ये गमनाऽऽगमनं वचनम्प्रतिवचनं च यन्निरुद्धमासीत् तत्सर्वं पुनः प्रारब्धम् । तात्पर्यमेतद् यदावां विवादात् पूर्व इव सञ्जातौ । एतस्मिन्मध्य एव एकस्मिन् दिवसे मम उभे अपि नेत्रे न जाने केन कारणेन ईषद्रक्ते भूत्वा श्वयथुयुक्ते सञ्जाते । तत्र पीडा कण्डूतिश्चाऽपि नितरां वर्धते स्म । सायंकालीनः समय आसीदत एव ग्रामे कुत्रचिद् आपणे हट्टे वा औषधादिकार्थमपि गन्तुं न प्राभवम् । रात्रौ सरूपो मम व्यथासमाचारमाकर्ण्य तत्र ज्ञातुकामः समागत । मम पीडाऽधिक्यं च विलोक्य स किमप्यौषधमानेतुं स्वकीयं गृहं गतवान् ।"

"प्रायः अर्धघण्टाऽनन्तरं यदा सरूपः प्रतिनिवृत्तस्तदा तस्य भार्याऽपि तेन सार्धमेव बभूव । भ्रात ! भवन्तं मिम् अधिकम् असत्यं वा कथयेयम् ? तस्य औषधनिक्षेपणात् पूर्वमेव मम मनसि काचित् शङ्केव सञ्जाता अत एवाऽहं केवलम् एकस्मिन्नेव नयने तदौषधं निक्षेप्तव्यम् इत्याग्रहं कृतवान् । ततस्तु मम वामं नयनं औषध-प्रक्षेपसमकालमेव तथा विचित्रमभवत् यथा केनचिद् रक्तमरिचमेव (लाल मिर्च) म ये वामनयने प्रक्षिप्तं भवेत् । असह्यपीडावशात् अहं दारुणं चीत्कार कृतवान् । दशलीटरपरिमितेन जलेन प्रक्षालनेनाऽपि न मम नेत्रदाह शान्तिमलभत । यथा कथञ्चित् स्कन्धपरीवर्त्तनेनैव तां निशां कथमपि यापितवान् ।'

बिरजूप्रोक्तां कथामह स्तब्ध इव श्रुतवान् । हस्ते पुस्तकमादाय मम नववर्षीय पुत्रोऽपि बिरजूमेव लोकते स्म । तस्य माता (मम पत्नी) अपि मम पार्श्वे एव स्थित्वा हतप्रभा भवन्ती बिरजूवर्णितां तां घटनां श्रृणुते स्म, स्त्रीसुलभकोमलस्वभावतया च स्वनयने विलन्नतां गमयति स्म । बिरजू पुनर्वक्तुमारब्धवान् -

"भ्रातः ! तदनन्तरमन्येद्युः प्रातःकाल एवाऽहम् आतुरालयं गतवान् । तत्र चिकित्सकेन यदुक्तं तन्निशम्य मम चित्तम् आर्त्तनादमिव चकार । चिकित्सकेन प्रोक्तं यत् मम नयने नेत्रसम्बन्धि किमप्यौषधं न हि परन्तु काचित् व्रणस्यौषधिस्तत्र निक्षिप्ता । तस्मादेव च मम नेत्रज्योतिः पूर्णतया नाशमगमत् । अहं स्वकीये वामेतरनयने हस्तं निधाय यदा दृष्टवान् तदा सम्पूर्णः संसारो मत्कृते अन्धन्तम एव बभूव । तस्यां निशि मम मानसं तथा दारुणं रुरोद यत् तत्सर्वं कस्य समक्षमहं कथङ्कारं च न्यवेदयिष्यम् ?" तथा-

विधो विश्वासघातः...... ? सोऽपि स्वकीयपितृव्यसुतेन...... ? रुधिर-सम्बन्धिना...? भ्राता व कृत ...?" इति कथयन् बिरजू अतिशयश्रान्त-मानस इव संवृत्तः। तस्य वदने विषादभावः करुणवेदना च प्रवर्धते स्म येन स निरीह इव प्रतीयते स्म। स्वयं मदीयमपि मानसं तत्सर्वं निशम्य दुःखवशात् किञ्चिदन्यथेव संवृत्तम्।

"एतत्तु महदनर्थकरं संवृत्तं त्वया समं बिरजू !" अहं दीर्घं निःश्वस्य सहानुभूति प्रकटयन् प्रावोचम्।

"हाँ भ्रात ! साम्प्रतं ग्रामाणां राजनीतिरेव तथाविधा सम्पन्ना। साधारणेष्वपि प्रसङ्गेषु विवादेषु च जनाः किमपि कर्त्तुं दुःसाहसमाचरन्ति। सहोदरः सहोदरमेव समाप्तुं प्रयत्नं कुरुते। पुत्रः स्वकीयजनकस्यैव रुधिरस्य पिपासुः। वध्वस्तथा दह्यन्ते यथा ता मानवा न भूत्वा तुष-तृणादिकं भवेयुः। पूर्वं तदेतत् सर्वं क्वचिदेवाऽपवादरूपेण आश्चर्यवृत्तान्तरूपेण वा श्रूयते स्म परं साम्प्रतं तु गृहे गृहे तदेतत् सर्वं सामान्यमिव वृत्तान्तम् अभिलक्ष्यते।"

"क्वचिद् अन्यस्मिन् चिकित्सालये त्वं न गतवान् चक्षुषःचिकित्सा-र्थम् ?"।

"न हि भ्रातः ! एवं नाऽस्ति। प्रत्युत तद्दिवसाऽनन्तरं तु प्रायः चिकित्सालयानामेव चङ्क्रमणं करोमि। वैद्यो हकीमो डाक्टरो यस्यकस्याऽपि प्रशंसा मया केनचित् श्रुता तत्रैवाऽहं धावमानो गतवान् परन्तु न कोऽपि लाभः सम्प्राप्तः। चक्षुषि ज्योति र्न पुनरागता...। भ्रातः साम्प्रतं चक्षुषः स्फोटनस्य दुःखं तावन्न तथा वर्तते यथा माम् इमे सरूपादयो बहवो ग्राम-वासिनश्च "काण" इति सम्बोध्य मम पृष्ठतः उपहसन्ति हृष्यन्ति च। तेषां विचारे तु निश्चितमेव मया किञ्चिन्महत् पातकं कृतं यस्य प्रतिफल-मस्मिन् वार्धक्ये कालेऽहम् अन्धत्वरूपेण प्राप्तवान्।" बिरजू रुदन्निव माम् अब्रवीत्।

अथ स गले समागतं कफं बहिर्निष्ठीव्य पुनः वक्तुमारब्धवान्—'भ्रातः ! भवानेव भणतु किमहम् अपराधी प्रतीये ? अहं तु यदैव किञ्चित् ज्ञानवान् सम्पन्नः तद्दिनादेव मम पिता गृहनिर्माणोपकरणानि (कन्नी, वसूली आदि) हस्तेष्वग्राहयत्। तथा चाऽहमपि 'तदेवाऽस्माकं भाग्यम्' इति मन्यमानो धनिकानां निर्धनानां वा गृहनिर्माणकार्ये—ये केऽपि माम् आहूतवन्तः तेषां सर्वेषाम् आज्ञानुसारं स्वकर्मणि निरतोऽभूवम्। भवानेव वदतु यत् कुत्रत्योऽयं

न्यायो यद् विश्वासघातं तु मया समं सरूपः कृतवान् परन्तु "पापी" इति सम्बोधनेन चाऽहम् आहूतः स्याम् ?" इति कथयन् स वस्त्रखण्डेन मुखमाच्छाद्य रोदितुम् इव सम्प्रवृत्त ।

"बिरजू शिल्पिन् ! धैर्यं धारयस्व। सौभाग्यमेव त्वदीयं यदिदं तव दक्षिणं नेत्रं सुरक्षितं वर्त्तते। अन्यथा सरूपस्तु त्वाम् पूर्णतया अन्धमेव विधातुं व्यूहं कृतवान् आसीत् । यश्चाऽयं लोकप्रवादस्य प्रश्नस्तत्र तु विचित्रैव संसारस्य गतिः। लोकोऽयम् एवमेव वर्त्तते। अत्र अल्पीयांस एव जनाः क्षते औषधलेपनं प्रकुर्वते। प्रायशस्तु क्षते क्षारमेव प्रक्षिपन्ति।" अहम् उक्तवान् ।

"धैर्यमेवाऽवलम्ब्य त्वहं साम्प्रतमपि जीवामि। भ्रातः ! मया विचारितं यत् लक्ष्मणपुरं (लखनऊ) महानगरं भवति। अत्रस्थाश्चिकित्सका अपि प्रसिद्धाः। सम्भवत इहैव कस्यचिद् हस्ते यशः स्यात् येन मदीया दृष्टिः परावर्त्तेत इति विचार्यैव तुभ्यं कष्टं प्रदातुमहं समागतः।" बिरजू कातरेण स्वरेण निजगाद।

"अरे ! इह खलु कष्टस्य का वार्त्ता ? त्वं तु मम ग्रामस्य गृहस्य च वर्त्तसे" अहम्प्रत्युवाच।

अन्येद्युरहं बिरजूं नीत्वा चिकित्सा-विज्ञान-संस्थानं गतवान् । चिकित्सकस्तस्य वामनेत्रं निरीक्ष्य प्रोक्तवान् यदस्य नेत्रस्य कनीनिका (कार्निया) पूर्णतया क्षतिग्रस्ता वर्त्तते। तस्य परिवर्त्तनं विना नेत्रज्योतिर्न पुनः प्राप्स्यते।

"अस्तु, डाक्टर साहब ! तस्य परिवर्त्तनं क्रियताम् अहं शल्य-चिकित्सार्थम् उद्यतोऽस्मि" इति बिरजू डाक्टरमहोदयस्य वचनं निशम्य सोत्साहं निजगाद।

"परन्तु नैतत् एतावत् सहजं सरलं च वर्त्तते। शल्यक्रिया अत्र नहि परं दिल्लीनगरे भविष्यति। तत्र कस्यचिदन्यस्य पुरुषस्य नेत्रात् कनीनिकाम् उद्धृत्य शल्यक्रियाद्वारा तव नयने प्रत्यारोपणं करिष्यते।" इति चिकित्सकः स बिरजूमनोजन्यम् उत्साहं मर्दयन्निव प्रत्युवाच।

क्षणम्पूर्वः समुत्पन्नः सर्वस्तस्य समुत्साहो नैराश्यम्प्राप्तवान् । स चेदं ज्ञातवान् एव यत्तस्य वामनयनस्य ज्योतिरिह जन्मनि पुनर्न प्रत्यावर्त्तिष्यते।

रिक्शायाने समारुह्य चिकित्सालयात् गृहं प्रत्यागमनकाले मां दृढतया अवादीत् – "भ्रातः! अहमधुना एकेनैव नेत्रेण सर्वं करिष्यामि। सरूपो ग्रामवासिनश्च यदि मां "काण" इति कथनेन सन्तोषमनुभवन्ति तदा तथैव कथयन्तुतराम्। साम्प्रतं तु मम आयुषः प्रायः पञ्चपञ्चाशद् वर्षाणि षष्टिवर्षाणि वा व्यतीतानि। न जाने कस्मिन् दिवसे प्राणाः निःसरेयुः। परन्तु एतदहं ज्ञातुमिच्छामि यत् चिकित्सको यन्मम चक्षुषि अन्यस्य पुरुषस्य किमपि निःसार्य यत् प्रत्यारोपितुं कथयति स्म तदा तस्य किं तात्पर्यम् ?"।

अहं तं प्रोक्तवान् –'तव नयने यत् कनीनिका वर्त्तते तां स्वस्थां कर्त्तुं किमप्यौषधं न प्रभवति। तस्य स्थाने तु कस्यचिदन्यस्य पुरुषस्य कनीनिकां निःसार्य प्रत्यारोपयितुं शक्यते। एतत्कार्याय चक्षुषाम् एकं बैङ्कं भवति, यथा धनस्य बैङ्कम्।"

"किं नेत्राणामपि बैङ्कं भवति ?" बिरजू साश्चर्यम्पृष्टवान्।

"एवम्, यथा बैङ्केषु रूप्यकाणाम् आदानं प्रदानं क्रियते तथैव नेत्र-बैङ्के नेत्राणाम् आदानं प्रदानं च क्रियते। तदर्थं जीवितावस्थायामेव एकस्मिन् प्रपत्रे हस्ताक्षरं कृत्वा घोषणीयं भवति यत् स मरणाऽनन्तरं स्वकीयं नेत्रं दातुं कामयते। मरणाऽनन्तरं च तस्य चक्षुंषि किञ्चित्समयाऽभ्यन्तर एव निःसार्य सुरक्ष्यते। तत्सर्वं तथा निपुणतया क्रियते येन मृतपुरुषस्य मुखेऽपि काचित् कुरूपता नैव प्रादुर्भवति। तथा च नेत्रप्रदानकर्त्ता स्वकीयनेत्रद्वारा अन्यस्य पुरुषस्य कृते ज्योतिः प्रयच्छन् अन्यमिव जीवनं जीवति। मन्ये त्वदर्थ-मेतत् सर्वम् आश्चर्यजनकमेव भवेत्।"

"आश्चर्यं न हि घोरम् आश्चर्यम्। एतत्सर्वं त्वहं प्रथमं वारमेव शृणोमि।" बिरजू प्रत्यवदत्।

"एवमेव केनचित् मनुष्यद्वारा प्रदत्तेन चक्षुषः प्रत्यारोपणेनैव त्वदीयं वामनेत्रं स्वस्थं भवितुं शक्नोति।' अहम् अवोचम्।

"अस्तु त्यजतु भवान् सर्वमेतत् चर्चाकार्यम्। अधुना अस्मिन् अति-प्रौढे वयसि दिल्लीं गत्वा नेत्रप्रत्यारोपणस्य सामर्थ्यं मम वशे नाऽस्ति। गृहे विद्यमानाया मम वृद्धायाः (पत्न्याः) यदि किमपि भविष्यति तर्हि कस्तां द्रक्ष्यति ?.." किञ्चिद् विरम्य पुनः स ततोऽग्रे ब्रवीति—'एकं नेत्रं तु वर्त्तत एव। तेनाऽपि पर्याप्तं पश्यामि यथाकथञ्चित् कार्यं च साधयामि। .. मम विचारे भगवता यत्कृतं तत्सम्यगेव कृतम्। भगवान् एव तु मह्यं यथासमयं बुद्धिं प्रदत्तवान् अन्यथा त्वहम् उभाभ्यामपि नयनाभ्याम् अन्ध

एवाऽभविष्यम् । पुनः कस्य हस्तमादायाऽस्मिन् वार्धक्ये जीवननौकां पारम् अकरिष्यम् ?" इति स्वनयनस्य चिकित्साऽक्षमत्वं निरूप्य बिरजूहृदये काचित् निश्चिन्तता दृढता समुत्साहश्च समजनि ।

तद्दिवसे रात्रौ भोजनाऽनन्तरं बिरजूशिल्पिना सह नानाविधा गृह-सम्बन्धिन्यो ग्रामसम्बन्धिन्यश्च वार्त्ताः प्रवर्त्तन्ते स्म । अधुना तस्य वदने सा कारुणिकता व्याकुलता च नाऽभवत् यां नीत्वा स ग्रामाद् इह समागत आसीत् । तदनन्तरं स गाढनिद्रया सुप्तवान् । प्रातरुत्थाय नित्यक्रियाऽनन्तरं चायपानं कुर्वाणः स माम् एवम् अब्रवीत्—

"भ्रातः ! एकां वार्त्तां कथयामि । किं भवान् अत्र मम साहाय्यं करिष्यति ?" ।

"कथं न शिल्पिन् ! यत् किमप्यहं कर्त्तुं शक्नोमि तत्करिष्याम्येव । त्वं निश्चिन्तः कथयस्व ।"

"भ्रातः ! अस्मिन् मासत्रये एकाक्षकारणात् यम् अपमानम् उपेक्षां तिरस्कारं चाऽहम् प्राप्तवान् तन्न शक्यते वर्णयितुम् । नगरे तु जनानां को विचार इति नाऽहं जानामि, परं ग्रामे तु सर्वस्मिन् शुभकर्मणि एकनेत्रः पुरुषः 'अशुभ' इव मन्यते । गृहे बहिरपि च प्रायः समान एव व्यवहार इह विषये । अत्यन्तं पूर्वापरं विचार्य क्वचिद् गमनाऽऽगमनं क्रियते मया । क्वचिदजानन्नपि यदि कस्यचित् जनस्य शुभकर्मणि अहम् उपस्थितो भवामि तदा एवं प्रतीयते यन्मयैव कश्चिद् अपराध आचरितः ।"

स किञ्चिद् विरम्य पुनरग्रे प्रोक्तवान्—"अहम् अद्य रात्रौ पर्याप्तं चिन्तनं विधाय एकं निश्चयं कृतवान् । विचारयामि यद् एकनेत्रवशात् समाजे यस्तिरस्कारः प्राप्यते मया, तम् अन्यः कश्चित् न प्राप्नुताम् । एकस्य पुरुषस्य तु समुद्धारः कर्त्तुमेव शक्यते मया । अत एव मरणाऽनन्तरमहं स्वकीयम् अवशिष्टमेकं नेत्रं प्रदातुमिच्छामि ।"

बिरजूमुखात् तमिमम् अप्रत्याशितं निर्णयं निशम्य अहन्तु मुग्ध इव सञ्जातः । अहम् उक्तवान्—"सत्यम्, एतत्तु महत्पुण्यात्मकं नेत्रदानस्य कार्यम् । यदि च त्वमिदं मन्यसे यत् तव वामनयनं कस्याऽपि पापकारणात् नष्टं स्यात् तदा तु तवेदं नेत्रदानकृतं पुण्यं तत्पापम् अत्यन्तं लघुतममेव विधास्यति ।"

बिरजूप्रस्तावमाकर्ण्य अहम्पत्रिकायास्तम्पृष्ठम् अन्वेष्टुम् प्रारब्धवान्

यस्मिन् नेत्रदानसम्बन्धिविज्ञापनं मुद्रितमभवत् । अधुनाऽहं तद्विज्ञापनम् अमार्गयिष्यम् एव इति तन्मध्य एव बिरजू पुनरब्रवीत्—

"भ्रातः ! अहमेकमपरमपि कर्त्तव्यं चिन्तयामि ।"

"किं तत् ?"

"अहं स्वकीयां समग्रामपि सम्पत्तिम् उत्तराधिकारिरूपेण रघुवीरस्य नामधेये करिष्यामि ।"

"अयं रघुवीरः कः ?"

"असावेव, सरूपस्य पुत्रः ।"

"अरे ! त्वं किं कथयसि ?"

'सत्यं भ्रातः ! यत् किमपि अनपेक्षितं सञ्जातं तत्तु सरूपेण सम्पादितम् । अत्र रघुवीरस्य को दोषः ? स एव चाऽस्माकं परिवारे एक एव उत्तराधिकारी । भवांस्तु जानात्येव यदहं निःसन्तानः । यदि च रघुवीरेण वंशो चलिष्यति तदा किमस्माकं नामधेयं जीवितं न भविष्यति ? यदि स सुखेन निवत्स्यति तदाऽस्माकमपि चात्मा तृप्तितामनुभविष्यति ।"

तत्सर्वम् अतिसहजतया कथयित्वा बिरजू गृहप्रस्थानाय स्वकीयानि वस्त्रादिकानि वस्तूनि एकत्रीकर्त्तुम् प्रारब्धवान् ॥

● ● ●

# पाश-मुक्ता

ग्रीष्मावकाशे सञ्जाते चिकित्सामहाविद्यालयात् यदा सावित्री स्वगृहमागतवती तदा तस्या माता धावन्ती द्वारमागत्य तां गाढमाश्लिष्य प्रोक्तवती —"त्वमतीव भाग्यवती वर्त्तसे। दिल्लीस्थास्ते जनास्तव मातुलस्य माध्यमेन स्वयमेव तव विवाहस्य सन्दर्भे प्रस्तावं प्रेषितवन्तः। विगतग्रीष्मावकाशे यदा तेऽत्र समागता आसन् तदैव त्वामिह दृष्टवन्तः।"

"मातः! किमिदं त्वं कथयसि? साम्प्रतं तु मम चिकित्साऽध्ययनमप्यपूर्णं वर्त्तते। कथमधुना विवाहस्य शीघ्रता? पूर्वमहम् स्वकीयमध्ययनं समापयितुमिच्छामि" सावित्री प्रत्युवाच।

"शीघ्रता अथवा साम्प्रतमावश्यकता तु नाऽभवत् किन्तु गृहागतां लक्ष्मीं कः परिवर्जयति? यदा किल तथाविधेन प्रतिष्ठितेन गृहेण सम्बन्धः स्वयमेव याचितः तदा कथं वयं निषेद्धुं शक्नुमः? चिकित्साविज्ञानमधीत्य एकमासेन यावान् अर्थलाभः तावत् तु तस्य पुत्रः एकस्मिन्नेव दिवसे

प्राप्नोति। त्वम् आजीवनं राजसुखं प्राप्स्यसि। अस्माभिः त्वद्विषये सर्वं पूर्वापरं विचारितम्। वयं त्वत्तोऽधिकं जानीमहे"—इति सगर्वम् उक्त्वा माता स्नेहेन शनैः उपास्पृशत्।

"मातः! मया उक्तं तु यदहं सम्प्रति विवाहं न करिष्यामि। अहं शिक्षिता भवामि, स्वकीयं भद्रम् अभद्रं वा पूर्णतया जानामि अहम् आजीवनं राजसुखं न कामये। अहन्तु चिकित्सिका भवितुमिच्छामि" इति सावित्री दृढतया प्रत्युवाच।

"अन्ततः का वार्त्ता वर्त्तते यत्त्वम् एवं भाषसे? वयं तु तव विवाहं कृत्वा सुखिनो निश्चिन्ताश्च भूत्वा तव कल्याणमिच्छामः, परन्तु किं त्वमेतद् सौभाग्यं नाऽस्मभ्यं प्रदातुमिच्छसि?"।

"चिकित्साऽध्ययनं समाप्याऽहन्तु स्वसहपाठिना सत्येन्द्रेण समं विवाहं निश्चितवती"।

तदाकर्ण्य महता कोपेन सावित्र्याः मुखे एकां चपेटिकां प्रदाय तस्याः माता ताम् आक्रुश्य अब्रवीत्—"किमेतद् जल्पसि? न सोऽस्माकं जाति-सम्बद्धः न च ज्ञातियुक्तः कथमपि। तदा कथं तेन सह विवाहसम्बन्धः सम्पत्स्यते? तव मस्तिष्कं तु चेतनायुक्तं वर्त्तते?"।

× × × ×

यदा द्वयोः प्राणिनोर्विचाराः रुचयः, आदर्शाः समाना भवन्ति तथा च तयोः पारस्परिकवार्त्तालापावसरः सम्मिलनाऽवसरश्च प्राप्यते तदा स्वभावत एव अन्योऽन्यम्प्रति आकर्षणं सहजं सौमनस्यञ्च समुत्पद्यत एव। सावित्र्याः सात्त्विकता, संगीतप्रियता, बुद्धिप्रखरता, स्पष्टवादिता च सत्येन्द्रस्य मानस-ममोहयत्। सत्येन्द्रस्याऽपि सत्यवक्तृता, कलाप्रियता, निपुणता, व्यक्तित्व-सुन्दरता, कार्यकुशलता च सावित्र्या मनांसि समाकर्षयत्। उभयोः पारस्परिकमाकर्षणं कदा स्नेहसूत्रतामुपगतमिति तु तावपि न ज्ञातवन्तौ।

सावित्री स्वकीयं भूतकालं चिन्तयन्ती सत्येन्द्रेण समं कृतं पारस्परिकं वार्त्तालापम् अनुस्मरति—

"सावित्रि! साम्प्रतं चिकित्सोपाधिप्राप्तौ केवलमेकमेव वर्षमव-शिष्यते। चिकित्सकौ भूत्वा आवामेकं व्यक्तिगतं चिकित्सागृहं (प्राइवेट क्लीनिक) निर्मास्यामः। सप्ताहे पञ्चदिनं तु पर्याप्तं परिश्रमं करिष्यावहे किन्तु दिनद्वयं पूर्णतया विश्रामं करिष्यावहे। तयोर्दिवसयोरावां ग्रामेषु क्षेत्रेषु, नदीषु, पर्वतेषु, प्राकृतिकवातावरणेषु च विहारं करिष्यावहे।"

"तव वार्त्तालापमाकर्ण्य प्रतीयते यत् समग्रः संसार एव मम चरणयो-र्विराजते।"

"केवलमिदमेव भयं विद्यते यत् मम निम्नकुलोत्पत्तिरेव क्वचिदा-वयोर्मध्ये व्यवधानं न प्रतिपादयेत्। अहं तुभ्यं प्रतीक्षारत एव भवेयम्, अथ च त्वं शिविकामारुह्य कस्यचिदन्यस्य गृहे गच्छेः।"

"किं जातिरेव सर्वं भवति। मदीयो जनको मयि अतीव स्निह्यति। कश्चिदवसरः समागच्छेत् तदैतत् सर्वं पितरमपि निवेदयिष्यामि स मम कदापि विरोधं न करिष्यति।"

"प्रतीयते यत्त्वया सह वासे एकं जीवनमपि न पर्याप्तम्।"

"त्वया तु ममैव मनसो विचारः प्रकटितः सत्येन्द्र !"

इति तस्यां विचारमग्नायां सत्यामेव सावित्र्या माता ससम्भ्रमं धावन्तीव तस्या जनकस्य कक्षे सद्यः समागत्य ब्रवीति—"श्रुतं त्वया ? तव प्रियपुत्री दिल्लीस्थान् तिरस्कृत्य केनचित् स्वकीय-सहपाठिना सत्येन्द्रेण सह विवाहं चिकीर्षति। किमेतदर्थमेव भवतः एषा अध्ययनार्थं प्रेषिता ?"।

'मा ब्रूहि व्यर्थमेतत् वितण्डावृत्तम्। कुलीनानाम् एतद् गृहम्। अत्रैवंविधा मूर्खतापूर्णा विवाहसम्बन्धा नार्हन्ति भवितुम्। प्रतीयते यदेतस्या बालिकाया ज्ञानतन्तुरेव समाप्तो जातः। तस्मादेवेयं विचित्रं व्यर्थं च भणति।'" इति जनकस्य शब्दाः श्रुतिपथमागताः।

तद्दिनादेव गृहे श्मशान-शान्तिः प्रादुरभवत्। तस्याः पिता श्रीश्याम-देवो नैव कदाचिद् गृहात् निर्गतः, नैव च पर्यंकादुत्थातुं समर्थोऽभवत् तस्य हृद्रोगोऽवर्धत। सावित्र्यपि नितान्तं मौनमुररीचकार। तस्या माताऽपि गृहकार्येषु निमग्ना। एतस्मिन्नेवाऽन्तरे दिल्लीस्थानां तेषां तारपत्रं समागतम्—'मन्ये सावित्री ग्रीष्मावकाशे गृहं समागता भवेत्। वयं विवाहतिथिनिश्चयार्थम् आगच्छामः" इति। माता तत् तारपत्रं तदीये पर्यंके निक्षिप्तवती। सावित्री तु प्रस्तरप्रतिमा इव सञ्जाता। तदनन्तरं तया सह किं घटितमिति तु साऽपि न ज्ञातवती। बलिवेदिस्थाने आत्मानं प्रस्तुत्य सा अन्ततः श्वशुरालयं प्राप्तवती एव।

श्वशुरालये तु महद् भवनम्, अनेके सेवकाः, सर्वेषां परिवारसदस्यानां कृते पृथक् पृथक् कक्षाः। तस्या अपि पृथक् कक्षः। तस्याः पत्युरपि पृथक्।

यदा तस्याः पतिः श्रीराजदेवो गृहं प्रत्यावर्तते स्म तदा सा सत्वरमेव द्वारदेशमागत्य स्वयमेव च कपाटमुद्घाट्य तस्य स्वागतार्थं प्रवर्तते स्म परन्तु रांजदेवः कथयति स्म यत् 'एतावत्सु सेवकेषु सत्स्वपि कथं तव द्वारपर्यन्तम् आगमनम् ?"। तदाकर्ण्य सा स्तब्धेव सञ्जायते स्म। यदा स विवृतकेशा सूत्रशाटिकां परिधाय सिन्दूरबिन्दुं ललाटे कृत्वा सज्जीभूय राजदेवेन सह क्वचिद् गन्तुं समीहते स्म तदा स कथयति स्म "नैष मह्यं तव सीता-सावित्रीसमो वेष-विन्यासः कथमपि रोचते। कीदृशी त्वं शिक्षिता यत् साम्प्रतमपि सौन्दर्यप्रसाधनालये (ब्यूटी पार्लर) गत्वा केशकर्त्तनं न कारयसि ?"।

एवंविधेषु क्षणेषु सहसैव सा सत्येन्द्रं स्मारं स्मारं रुदितवती। तस्याः विवृताः केशाः सात्त्विकं परिधानं च कथंकारं तस्मै रोचन्ते स्म !। एकदा सा राजदेवस्याऽनुकूलां मुद्रां विलोक्य प्रोक्तवती—"अत्र तु भवान् सर्वदैव व्यस्तः कार्यनिरतश्च तिष्ठति। समय एव नोपलभ्यते मदर्थम्। कतिचिद् दिनार्थं कृपया भवान् कस्मिंश्चित् पार्वत्यप्रदेशे रम्ये स्थाने चलतु।"

तस्या वाक्यमाकर्ण्य श्रीराजदेवः किञ्चिद् विहस्य तस्याऽवहेलना-मिव कुर्वाणः प्रोक्तवान् "भ्रमणं पर्यटनादिकं वा केवलं कार्यविहीनानाम् अकर्मण्यानामेव प्रवृत्तिः। अत्र तु प्रत्यहं लक्षरूप्यकाणां व्यापारः प्रवर्त्तते। वयं पर्वतस्थले गत्वा किं प्रस्तराणां गणनां करिष्यामहे ? कथमेतत् तव व्यर्थचिन्तनम् अभवत् ?"।

श्रीराजदेवस्याऽवहेलनायुक्तां वाचमिमां समाकर्ण्य सावित्र्याः मानसम् अत्याहतं सञ्जातम्। तस्यां निशि सा स्वकीयमाननम् उपधाने संगोप्य प्रकामं रुदितवती। तस्याश्चित्तं चीत्कारमिव कुर्वत् मातरं प्रत्याह यत्— 'पश्य स्वसुतायाः राजसुखम्'।

एकस्मिन् दिवसे कश्चिद् विशिष्टः सामूहिकभोजः (पार्टी) समा-योजितः आसीत् यस्मिन् नगरस्य प्रतिष्ठिता व्यापारिणः अधिकारिणश्च निमन्त्रिता आसन्। अनिच्छन्ती अपि सावित्री तस्मिन् दिने पत्युराग्रह-वशात् स्वकीयान् दीर्घकेशान् कर्त्तयितुं विवशाऽभवत्। सहभोजप्रसङ्गे सुरापानमपि प्रारब्धम्। तदैव श्रीराजदेवस्य घनिष्टः सखा शुक्लमहोदयः सावित्र्याः समीपे एव स्थित्वा तस्याः स्कन्धे स्वहस्तमवलम्ब्य राजदेवम-ब्रवीत्—"अरे! त्वं तु अतिभाग्यवान् असि यद् एतादृशी सुन्दरी पत्नी त्वया लब्धा" !।

तत्सर्वं निरीक्ष्य सावित्र्याः शरीरे सहस्राणि कण्टकानीव समुद्गतानि। तथा च सा सहसा शुक्लमहोदयस्य हस्तमुत्क्षिप्य ततः समुत्थाय अन्यत्र प्रस्थिता।

तस्मिन् समये राजदेवस्तथाविधाभ्याम् आग्नेयनेत्राभ्यां तामपश्यत् यत् सा तस्य तात्पर्यमवेदीत्। सा गृहाऽभ्यन्तरे समायाता। एतत्सर्वं तत्कृते तस्याः सहनसीमातोऽप्यधिकमासीत्। राजदेवस्तु कोपाविष्टः सन् ताम् अन्वागत्य तस्या उपरि चपेटिकाप्रहारं कुर्वाण आह—"शुक्लमहोदयेन समं तथाविधायाः अशिष्टतायाः का आवश्यकता आसीत्? तव कारणादेव मम महान् अपमानः सञ्जातः। त्वं तु मूर्खतमाऽसि, ग्राम्याऽसि, नव्यम् आधुनिकं व्यवहारं च कदापि न ज्ञातुं शक्नोषि।"

तदनन्तरं प्रायः एवंविधैः कार्यैः परिस्थितिभिश्च सावित्री शनैः शनैः भग्नतां प्राप्तुं प्रारब्धवती। तस्या जिजीविषाशक्तिरेव समाप्ता। प्रतिदिनं विधीयमानाभिस्तथाविधघटनाभिः सा पुटपाकप्रतीकाशाम् अन्तर्गूढघनव्यथामासाद्य क्षयरोगग्रस्ता सञ्जाता। शरीरे संक्षिप्तज्वरः प्रारब्धः। कासेन सह रक्तवमनमपि प्रारब्धम्। एकदा चिकित्सकेनोक्त यत् तस्या एकः फुफ्फुसः पूर्णतया विनष्ट इव प्रवर्त्तते अत एव शीघ्रमेव सा कस्मिंश्चित् स्वास्थ्यचिकित्सालये (सैनिटोरियम) प्रवेष्टव्या।

राजदेवस्य समीपे समय एव कुत्राऽऽसीत्, स तु कारयानद्वारा तां भुवालीस्थिते चिकित्सालये सम्प्रेष्य तत्रस्थान् चिकित्सकान् च दूरभाषद्वारा सूचनां दत्त्वा स्वकर्तव्यतााया इतिश्रियं मेने।

भुवाली-चिकित्सालये तत्रस्थे विवृते सुखदे च वातावरणे सावित्र्याः स्वास्थ्यं सद्य एव सुन्दरं सञ्जातम्। चिकित्सालयप्राङ्गणे विद्यमानानि दीर्घाणि घास-क्षेत्राणि कुसुमानाम् उपक्षेत्राणि च पश्यन्ती सा अपूर्वां शान्तिं तत्र लभते स्म।

एकदा चिकित्सकस्ताम् अवादीत्—"सावित्री देवि! अधुना भवती कतिपयदिवसैरेव गृहं गन्तुं शक्ष्यति। यद्यपि सावित्र्याः मानसं कथयति स्म यत् गृहे गत्वा तु सा पुनरपि आधि-व्याधिग्रस्ता भूत्वा जीवनेऽसमर्था भविष्यति अत एव तस्या इतः प्रस्थानं न श्रेयस्करम्, किन्तु तस्मिन्नेव दिने श्रीराजदेवस्य दूरभाषं समागतं यस्मिन् तेन निर्दिष्टं यत् होलिकोत्सवसामीप्यात् सावित्र्या गृहे समागमनम् आवश्यकम्। चिकित्सको दूरभाषेण राजदेवमब्रवीत् यत् सम्प्रति मासमेकमपरं यदि सावित्री इहैव निवसेत् तदैव

पूर्णतया स्वास्थ्यलाभो भवेत् । परन्तु राजदेवस्य आग्रहवशात् सावित्री गृहं प्रत्यागता ।

× × × ×

गृहे षण्मासानन्तरमेव तस्य रोगः पुनः वृद्धिम् अगमत् । विवशतया सा पुनः चिकित्सालयं प्रापिता । चिकित्सकैः संकेतितं यत् तस्य उभे अपि फुफ्फुसे शनैः शनैः क्षतिग्रस्ते भवतः । केषाञ्चित् मतानुसारेण तु तस्या जीवनस्य आशाऽपि दुराशामात्रम् एव । स चक्षूंषि निमील्य रोग-शय्यायां निषण्णा आसीत् । एतस्मिन्नेवाऽन्तरे कस्यचित् करस्य कोमलेन स्पर्शेन तस्या नयने उन्मीलनाय विवशीभूते ।

समीपस्थं करतलस्पर्शकारिणं पुरुषं विलोक्य तस्य म्लानमनसि विश्वास एव न समुत्पन्नः । पुनश्चक्षूंषि सम्मार्ज्य सा निपुणं निरीक्षितवती । अरे ! अयं तु स एव सत्येन्द्रः साम्प्रतमत्र चिकित्सकरूपेण स्वगले रोग-समीक्षणयन्त्रम् (स्टेथिस्कोप) अवलम्ब्य श्वेतकोट-वस्त्रं च परिधाय तस्याः सम्मुखे स्थितो वर्त्तते !! ।

"सावित्रि ! किमेतदहं पश्यामि ? कथं त्वमत्र ? किमभूत् ते ? त्वया तु मादृशेन चिकित्सकेन भाव्यम् आसीत् परन्तु त्वमेवाऽत्र रोगिरूपेण कथं समागता ?" इत्यादि कथयन् सत्येन्द्रस्य कण्ठः वाष्पावरुद्धः सञ्जातः । सावित्र्याः मुखात् शब्दा एव निःसर्त्तुं न प्राभवन् । नेत्राऽपाङ्गैः केवलम् अश्रुधारा निर्बाधं प्रवहति स्म । सा निर्निमेषाभ्यां नेत्राभ्यां सत्येन्द्रं निरूपयन्ती मौनमिव स्थिता । विचारयति स्म यदिदं सर्वं सत्यम् आहोस्वित् स्वप्नदर्शनमात्रम् ! ।

तस्याः प्रवहन्ति अश्रूणि स्ववस्त्रखण्डैः प्रोञ्छन् सत्येन्द्रोऽवादीत्—"ममेदम् अत्र चिकित्सकरूपेण प्रथमा नियुक्तिस्तथा च त्वम् मम प्रथमा रोगिणी । अहं यथासम्भवं त्वां स्वस्थामेव विधातुं प्रयतिष्ये । नाऽत्र नैराश्यस्य कथमपि कारणम् । त्वं तु स्वयमेव विचारैराशावादिनी प्रबल-विश्वाससंयुक्ता च वर्त्तसे । धैर्यं धारयस्व, सर्वं मनोनुकूलं सम्पत्स्यते ।

"न हि सत्येन्द्र ! न हि, साम्प्रतम् एताभिः परिस्थितिभिः योद्धुम् मदीया शक्तिरेव समाप्ता । अहम् अन्तस्तलपर्यन्तं भग्ना खण्डिता च भवामि ।"

तदनन्तरं सत्येन्द्रस्य सहानुभूतेः समक्षं स्वकीयां सकलां मनोव्यथां वृत्तान्तं च सावित्री साङ्गोपाङ्गम् आद्योपान्तं च वर्णयाञ्चकार ।

"सर्वम् अनुकूलं सम्पत्स्यते सावित्रि !। परिस्थितिभिः समायोजनमेव तु मानवजीवनम् । परन्तु पश्यामि यत् अद्य त्वं कृपणा भवसि । मह्यं वर्धापनमपि त्वया न प्रदत्तम् । अद्य तु मम कार्यारम्भस्य प्रथमो दिवसः ।"

"अहो ! मया तु तत् विस्मृतमेव··· तुभ्यं शतशः वर्धापनानि··· साम्प्रतं त्वं चिकित्सकः सञ्जातः । किमद्य मिष्ठान्नमपि न भोजयिष्यसि ?"

"अवश्यम् अवश्यमेव·· परन्तु त्वं पूर्वं स्वस्था भूत्वा मिष्ठान्नं भोक्तुं योग्या तु भवेः···।"

सत्येन्द्रद्वारा मनोयोगपूर्वकं कृतैः चिकित्साकार्यैः, मधुरव्यवहारैः, स्नेहसिक्तसंवादैश्च सावित्री शनैः शनैः पर्याप्तं स्वस्था समवर्त्तत । सत्येन्द्रस्तु चिकित्सालये स्वकीयावकाशसमयेष्वपि सावित्र्याः सामीप्ये समागत्य तां प्रसादयितुं प्रयतते स्म ।

"पश्य साम्प्रतं तव ज्वरः समाप्तः । शनैः शनैः त्वं पूर्णतया स्वस्था संवृत्ता ।"

"मन्ये ज्वरस्तु त्वामवलोक्यैव पलायितो भवति । त्वं तथा महान् असि यत्तव पुरतः कोऽपि स्थातुमेव न क्षमः ।" सावित्री मन्दं विहस्य प्रत्युवाच ।

"पुनरपि तुभ्यम् अवकाशो न प्रदास्यते । द्विमासपर्यन्तम् अधुनाऽपि त्वया निवासो विधेय एवाऽत्र । विगतकाले तु इतः शीघ्रगमनादेव तव स्वास्थ्यम् पुनः असमीचीनं संवृत्तम् । सम्प्रति पूर्णतया इहैव विश्रामः कर्त्तव्यः ।"

"इतः खलु को गमनम् अभिलषति ? गृहादपि श्रेष्ठ एष चिकित्सालयो मत्कृते । अस्तु त्वया नैतत् कथितं यत् तव गृहे साम्प्रतं के के वर्त्तन्ते ? सर्वेषां कः समाचारः ? त्वं प्रसन्नस्तु वर्त्तसे ?" ।

"सर्वं समीचीनं मम गृहवृत्तान्तम् अहमपि सर्वथा प्रसन्नः । त्वयि स्वस्थायां सत्यां निजगृहं दर्शयिष्यामि ।"

× × × ×

सावित्री साम्प्रतं पर्याप्तं स्वस्था समभवत् । सत्येन्द्रः तं प्रत्यहं भ्रमणार्थं नयति स्म । भुवालीपार्वत्यप्रदेशे पर्यटनेन सावित्र्याः हृदयं सत्येन्द्रस्य सान्निध्येन द्विगुणं प्रमोदमनुभवति स्म । नदीनिर्झरान् प्राकृतिकसुषमाश्चाऽवलोकमवलोकं सा निजदुःखं प्रायः विस्मृतवती एव ।

भ्रमणाऽनन्तरं सोपानाऽऽरोहणसमकालं सत्येन्द्रस्य बाहुभ्यामाश्रिता सावित्री स्वकीये विस्मृते स्वर्गे समधिगता। तदैव स्वकीयं गृहं संस्मृत्य सा दुःखकातरा शोकाकुलिता चाऽवर्त्तत।

"त्वं होलिकाऽवसरे गृहं कथं न गतवान् ?"

"त्वाम् एकाकिनीं परित्यज्य कथं गन्तुं प्राभविष्यम् ?"

"मन्ये तव गृहे सर्वे तव कृते प्रतीक्षारताः भवेयुः ?"

"मम गृहं तु मम समीपमेव तिष्ठति। पूर्वं माता जीविता आसीत् साम्प्रतं तु साऽपि न वर्त्तते। अत एव कुत्र गच्छेयम् ? त्वया सह वासाय मम एकं जीवनमपि अपर्याप्तम्"···इत्युक्त्वा सत्येन्द्रः स्नेहसिक्तमनसा सावित्र्याः स्कन्धे स्वकीयं करं निहितवान्।

"अरे किमिदं त्वं भणसि...किमिदं करोषि ?···नैतत् त्वया कर्त्तव्यम् ···अहमपि कस्यचित् पत्नी भवामि···त्वं···।"

"अहं सर्वम् आकलय्य कथयामि। तव पतिः श्रीराजदेवः सम्प्रति सुकुमार्याः कुमारी-रचनादेव्याः वशे वर्त्तते, अथ श्रुतं तु एतदपि यत् सः अचिरात् एव त्वत्तः सम्बन्धविच्छेदं कामयते। त्वं कष्टम् अनुभविष्यसि इति विचार्यैव अयं समाचारः अधुनावधि तुभ्यं न प्रदत्तः" इत्युक्त्वा सत्येन्द्रः मौनम् अवस्थितः।

एतद्वचनं निशम्य सावित्री मौनमवलम्ब्य पर्य्यङ्के निषण्णा निर्निमेषाभ्यां नयनाभ्यां बहिरुड्डीयमानान् खगान् समवलोकयन्ती स्थिता। सत्येन्द्रस्तु तदानीं स्थितिगाम्भीर्य्यम् अवेक्ष्य पुनरागमनाय कक्षतः बहिरगमत्।

एवं व्यतीतेषु कतिपय-दिवसेषु दिनाऽनुदिनं विकृतिं भजमानां सावित्र्याः विषण्णां मनःस्थितिम् आकलयन् सत्येन्द्रः पुनरेकदा ताम् अवादीत्—"सावित्रि ! किं पुनः अस्वस्था भवितुम् इच्छसि ? अधुना चिन्ताविषादः त्वयि नोचितः। त्वम् इदम् द्वितीयं जीवनं भाग्येन बहुकष्टसाध्यैः चिकित्सोपचारैः प्राप्ता असि। तदेतत् मुधैव विनष्टं मा कुरु।"

"जानामि सत्येन्द्र ! चिकित्सया सह तव मधुरतरः व्यवहारः एव मह्यं पुनर्जीवनं प्रादात्। अहं तव एतं महदुपकारं विस्मर्त्तुं न कामये। किन्तु किं करवाणि ? कस्मिन्नपि सामाजिके बन्धने बद्धा अस्मि।"

"बन्धनम् ? कीदृशं बन्धनम् ? बन्धनम् एतद् हार्दिकं प्रेमपरम् भवति,

तत् एक पक्षीयं तु न भवति। एकस्तु बन्धनं त्रोटयित्वा सुदूरं पलायेत अपरस्तत्र बन्धनं पूजयेत् ?।"

"आम्, सत्यम्…" इति कथयन्ती सा सोच्छवासं विचारमग्ना सती गवाक्षात् सुदूरम् आकाशं पश्यन्ती निर्वाक् अवस्थिताऽभवत्।

शीघ्रमेव आगच्छामि इत्युक्त्वा बहिर्गते एव सत्येन्द्रे श्रीराजदेवस्य सावरकं (लिफाफा) विवाहविच्छेदसूचकं रजिष्ट्रीपत्रम् आगतम्। त्वरया उद्विग्नमनसा उद्घाट्य तत् यदा वाचितवती तदा सहसा मुखात् निर्गतम् "ओह! त्वया अहं पञ्जराद् उन्मुक्ता बन्धनमुक्ता वा कृता अस्मि" इति शाटिकाञ्चलेन मुखम् आच्छाद्य सत्येन्द्रं ध्यायन्ती पर्यङ्के न्यपतत्।

• • •

# केवलं प्रश्ना एव

पञ्चघण्टाऽनन्तरमेव मम संसारो विसर्जनमेष्यतीति कः कल्पितुं शक्नोति स्म ?। परन्त्वहं प्रस्तरमूर्तिभूता निर्निमेषाभ्यां नयनाभ्यां दृष्टवती यन्मम सर्वे स्वप्ना मम समक्षमेव अग्निसाद् भवन्ति स्म। मम जीवनस्य आधारोऽपि मत्पुरत एव नश्यति स्म।

सुधामहोदया प्रसवचिकित्सालये (मैटर्निटी होम) तिष्ठति स्म। त्रिदिवसपूर्वमेवाऽसौ एकं मृगशावकसदृशं शिशुम् अजीजनत्। स्वपत्नीं सुधां मिलित्वा सुशीलः सान्ताक्रुज-वायुयानस्थलं समागतः। अहन्तु कार्यालयादेव तस्मै यात्राशुभकामनां प्रकटयितुं वायुयानस्थलमागतवती। निर्धारिते समये बोइंग ७३७ विमानं सायं षड्वादने मद्रासनगरार्थम् उड्डयितुं प्रारभत। सम्प्रति अहं दर्शकदीर्घायाम् एवाऽभूवम् इति तन्मध्य एव विमानं पुनः प्रत्यागतम्। तस्य यन्त्रे किमपि दूषणं समागतमासीद् अत एव सर्वे यात्रिणो विमानात् अवतीर्य पुनः प्रतीक्षालये समागताः।

एकघण्टापर्यन्तं प्रतीक्षायां कृतायाम् अहं सुशीलम् उक्तवती—"अद्य त्यजतु भवान् यात्राविचारम्। श्वस्तने दिवसे गच्छतु भवान्।"

"न हि सीमे ! अद्य तु मम गमनम् अत्यन्तमावश्यकं वर्त्तते। यदि प्रातः दशवादनपर्यन्तमहं मद्रासनगरे श्रीरामास्वामिनं न मिलिष्यामि र्तीह मम विंशतिलक्षरूप्याणां व्यवसायस्यादेशो विनष्टो भविष्यति।" सुशीलः प्रत्यवदत्।

"तत्तु सत्यम्, परन्तु मम हृदयं न जाने कथमद्य कम्पतेतमाम्, चित्तं च विचित्रमिवाऽनुभवति।" अहम् उक्तवती।

"तत्र चिन्ता न कर्त्तव्या। किमपि नैव भविता।" सुशीलः प्रत्युक्तवान्।

विंशतिलक्षरूप्याणां व्यापारस्य प्रश्न आसीद् अत एवऽहमपि तूष्णीमभवम्। ततोऽग्रे पञ्चघण्टापर्यन्तम् एवमेव वार्त्तालापेऽस्माकं समयो व्यतीतः। विगतवर्षद्वयात् मम मनसि वारंवारम् अत्यन्तं महत्त्वपूर्ण एकः प्रश्नः समुदेति स्म परन्तु तं प्रश्नं सुशीलमहोदयस्य पुरतः प्रस्तोतुं मम साहसं नाऽभवत्। साम्प्रतं तु वायुपत्तने पर्याप्तं प्रतीक्षासमयमनुभूय मया स प्रश्नः सुशीलस्य समक्षं प्रस्तुत एव।

"सुशील ! अहं बहुतिथाद् एकं प्रश्नं प्रष्टुमिच्छामि।"

"अस्तु, कथय।"

"किं सुधामहोदया आवयोः सम्बन्धे किमपि जानाति ?"

"नैवम्, सा किमपि नैव जानाति।"

"सा सन्दिह्यति ?"

"कथमपि न हि।"

"कथमिदं सम्भवं यत् सा सन्देहमपि न कुर्यात् ?"

"मया तथाविधा व्यवस्था कृता येन सुधाया मनसि स्वप्नेऽपि कश्चित् सन्देहो न भवितुमर्हति।"

"अस्तु, यदा कदाचिद् सन्देहः समुत्पद्येत एव, यथार्थं च जानीयात् तदा ?"

"मन्ये एतस्मिन् विषये तया काचिद् आपत्तिर्न करणीया। मया तु

तस्यै सम्पूर्णं प्रेमाणं, स्नेहं, सौख्यं जीवनस्य च विविधानि सुखकारकाणि सुविधाजनकानि च वस्तूनि प्रदत्तानि।"

"पुनरपि काचित् पत्नी किं स्वपत्युः प्रेमाणं विभक्तरूपेण स्वीकर्त्तुं शक्नोति?"

"याः स्त्रिय एवंविधं संकुचितम् अयथार्थं च दृष्टिकोणं पालयन्ति ताः परित्यक्ता इव भूत्वा जीवनपर्यन्तं पश्चात्तापमेव कुर्वन्ति।"

सुशीलस्य साहसपूर्णा इयं स्पष्टोक्तिरेव माम् अन्तस्तलपर्यन्तम् आश्वस्ताम् अकरोत्। पुनरावाम् इमं प्रसङ्गम् एकतः कृत्वा काफीपानं कर्त्तुं स्वल्पाहारस्थानं गतवन्तौ।

रात्रौ द्वादशवादनपर्यन्तं वायुयानं मद्रासनगरार्थं पुनः प्रस्थितम्। तद् विमानपथम्परित्यज्य किञ्चिद् उपरि गतम्। परन्तु तस्मिन् आकाशे सम्प्राप्ते एव सहसा तत् अग्निपिण्डं भूत्वा विमानपत्तनस्थलस्य समीपमेव निपतितम्। सर्वत्र सहाहाकारं घोरश्चीत्कारस्वरः समुत्पन्नः।

नेत्रोन्मीलनसमकालमेव सर्वं विनष्टम् अहन्तु मूर्च्छितेव सञ्जाता कथमप्यात्मानं संयतीकृत्य तत्र गतवती यत्र वायुयानस्य भग्नावशेषा। आसन्।

× × × ×

एतद्दुखदायिन्याः करुणघटनायाः सम्प्रति सप्ताहो व्यतीतः। अहं सुधामहोदयां साक्षात्कर्त्तुं स्वात्मनि साहस न सम्पादयामि एकं तु तस्याः प्रसवाऽनन्तरं दौर्बल्यं द्वितीयमिदम् असह्यं भयावहञ्च वैधव्यम्।

अहन्तु आत्मानं जानामि। विगतदिनत्रयात् प्रायः विष्टरे एव सीदामि। बुभुक्षा-पिपासा-निद्रादिकं सर्वमस्तंगतम्। केवलं चाय-बिस्कुटादि-भक्षणेन कथमपि आत्मानं धारयामि। अन्नस्यैकोऽपि कणो मुखे न गतः। प्रतिपलं सुशीलस्यैव मुखं चक्षुषोः समक्षं नरीनृत्यते स्म।

एका विचित्रा जडता रिक्तता च मम जीवने समागता। किमियमेव मम परिस्थितिः? किमहम् अविवाहिता वर्त्ते—आहोस्विद् विधवा? अहं का भवामि? मम किं भविष्यति?।

मम समीपे केवलं प्रश्ना वर्त्तन्ते। उत्तराणि त्वहं मार्गयामि। स्वकीयं विगतम् अतीतं स्मरन्ती मधु-तिक्ताभिः स्मृतिभिर्भूतकालं संयोजयन्ती स्वकीय-प्रश्नप्रहेलिकानाम् उत्तरं साधयामि…।

आत्मनः सुशीलस्य च सम्बन्धानां का रूपरेखा? इति प्रश्नो माम् अतीव विध्यति स्म। यद्यपि विगतवर्षे सुशीलमहोदयेनाऽस्य समाधानमपि प्रस्तुतमासीत्। स व्यापार-सन्दर्भे दिल्लीं गच्छति स्म। अहमपि तेनैव सममेव तस्य व्यक्तिगतसचिवरूपेण यात्राम् अकार्षम्। यत्र स्वामी तत्रैव तु सहायकेनाऽपि भाव्यम्।

सायं सार्ध-षड्वादनस्य वायुयानेनाऽऽवां प्रस्थितौ भूत्वा अष्टवादने दिल्लीं प्राप्तवन्तौ। वायुयानपत्तनात् पञ्चताराङ्किते भोजनालये गतवन्तौ यत्रावयोः कृते एकस्य कक्षस्य आरक्षणं पूर्वत एव बभूव। रात्रौ भोजनं विधाय एकस्मिन्नेव विष्टरे तथैव सुप्तवन्तौ यथा कौचित् पतिपत्न्यौ शयनं कुर्वाते निःसंकोचम् उद्विग्नतारहितम्। आत्मसमर्पणं त्वहं ततोऽपि वर्षद्वयम्पूर्वमेव कृतवती यदा सुधा देव्याः प्रथमः प्रसूतिकाल आसीत्। तदा आवयोर्विदेशयात्रायाः कार्यक्रमो निश्चित आसीत्। सुशीलो लन्दननगरं गच्छति स्म. अहञ्चापि तेनैव स मेव तत्र गतवती। विदेशप्रवासे आवां सर्वथा संयमस्य सीमारेखाम् उ लंघ्य प्रथमवारंपति - पत्नीभावम्प्राप्तवन्तौ।

अस्तु, तस्मिन् दिने दिल्लीनगरस्य पञ्चताराभोजनालये सुशीलस्य वक्षःस्थले स्वशिरः स्थापयन्ती अहम् उपपत्नी भावबोधेन जायमानम् आत्मनः अवसादं निरोद्धुमक्षमा सञ्जाता। ममाऽन्तस्तले किमप्येवं घटति स्म प्रतीयते स्म च येनाऽहम् आत्मानं सहजं स्वाभाविकं च कर्त्तुं न प्राभवम्।

मन्ये सुशीलस्तम् अन्तर्द्वन्द्वं निरूपितवान्। सोऽब्रवीत् "किम् भो! सीमे! कथय का वार्त्ता? साम्प्रतं त्वं सहजा स्वाभाविकमनःस्थितियुक्ता च न प्रतीयसे?"

"न हि एवं नु किमपि न वर्त्तते" अहम् उद्विग्नमानसा प्रोक्तवती।

"किमपि अन्तर्निहितं मा कुरुष्व। स्पष्टं कथय किं ते मनसि चिन्तनम्?" इत्युक्त्वा सुशीलो मे शिरः स्वकीयवक्षःस्थलात् पृथक्कृतवान्।

"एकः प्रश्नो वर्तते यस्योत्तरम् अन्वेषयन्ती अहमतीवोद्विग्नताम् अनुभवामि।"

"कोऽयम् प्रश्नः?"

"भवदीये जीवने मम किं स्थानम्?"

कतिचित् क्षणं मौनमवलम्ब्य सुशीलः किमप्यकथयन् तत्क्षण

मेव मां गाढमाश्लिष्य प्रोक्तवान्—"एवंविधानि मूर्खतापूर्णानि वृत्तान्तानि कथं चिन्तयसि ?"

"पश्यतु भवान्, यः प्रश्नो मया कृतः नाऽसौ मूर्खतापूर्णः। विवाहेतर-सम्बन्धयुक्तायाः प्रत्येकस्या नायिकाया मनसि प्रायः एष प्रश्नः समुदेति। किन्तु सा संभवतः प्रष्टुं साहसं न कुरुते। परन्तु अहम् ? मयि विश्वसिहि सुशी! ·· नाऽहम् अनुभवामि यद् आवयोः सम्बन्धः केवलं विशुद्धो व्यावसायिकः; अथवा शारीरिक-क्षुधा-जन्यः; अथवा मनोरञ्जन-प्रदानाय माध्यमः।"

"त्वमपि मयि पूर्णं विश्वसिहि। अहं त्वाम् आन्तरेण अतिशयं स्निह्यामि, प्रेम करोमि।"

"अस्मिन् विषये तु मम मानसं कदाप्येवाऽविश्वासं न कुरुते।"

"पुन का समस्या ?"

"भवदीये जीवने सुधादेवी प्रथमत एव पत्नीरूपेण विराजते। पुनः मां प्रति भवदीया इयम् आसक्तिः इदं प्रेम असौ व्यवहारः ·· ! सत्यं कथयामि यदहं किमपि निरूपयितुं विचारयितुं च अक्षमा इव भवामि। प्रतीयते यत् कुत्रचित् असामान्यम् अनुचितं विचित्रं च वर्तते आवयोः सम्बन्धेषु ।"

"न किमपि वैचित्र्यम् अनौचित्यं वा सीमे! मम जीवने तव तदेव स्थानं वर्तते यत् स्थानं सुधायाः।"

"ओह! सुशील! न हि। तत्कृते तु मया द्वितीयं जन्म ग्रहीतव्यं भविष्यति।"

"न हि सीमे! तत्सर्वं तु मया अस्मिन्नेव जीवने तुभ्यं प्रदत्तम्। किमहम् अन्यथा कथयामि ?"

तदाकर्ण्य क्षणपर्यन्तं त्वहं तूष्णीं शान्ता च सञ्जाता। सुशीलस्य वचने सत्यता त्वासीत् परन्तु विसंगतियुक्ता क्रूरतापि अवर्त्तत। अहं तस्य विरोधं कर्त्तुं न प्राभवम्। नाऽत्र सन्देहो यत् सुशीलद्वारा मया तावत् सर्वमेव तत् प्रापितमासीत् यत् काऽपि पत्नी यावत् कल्पितुमपि न समर्था। पुनरपि सत्यपि सर्वस्मिन् सौविध्ये न जाने कथम् अभावस्य कश्चन व्रणो मम चेतसि शनैः शनैः वर्धते स्म। मम मौनमाकलय्य सुशीलः पुनरब्रवीत् —

"संभवतः त्वाम् अहं सन्तुष्टां कर्त्तुं नाऽशकम् ?"

"अहं चिन्तयामि यत्…"—स्वकीयं वचनं पूर्णं कृत्वाऽहं सुशीलं मर्माहतं कर्त्तुं न वाञ्छामि स्म। परन्तु सुशीलः संभवतः मम मनोगतं सर्वं ज्ञातवान्। स सहसा गंभीरः सन् उन्मुक्तस्वरेण प्रोक्तवान्—"जानाम्यहं यत् त्वं किं चिन्तयसि। संभवत आवयो ग्रंन्थिबन्धनपुरःसरम् अग्नेः समक्षं सप्तपदीयुक्ता विवाहस्यौपचारिकता न संवृत्ता…? अहम्पृच्छामि यत् किं द्वयोः प्राणिनोः प्रसन्नतायाः शपथमिदं किं सप्तपदीकृत्यमेव वर्त्तते ? किमेतत् कृत्वा सर्वे संसारे प्रसन्ना एव जायन्ते ?"।

सहसा त्वहं तत्र किमप्युत्तरं दातुं न प्राभवम्। मां मौनां निरूप्य सुशीलः पुनरग्रे अवादीत्—"सीमे! वास्तविकं ग्रन्थिबन्धनं तु मनसः आत्मनश्च भवति। सत्यं जानीहि यत् विवाहः सत्यसुखस्य प्रामाण्यं न भवति। संसारे बहवः एवंविधा विवाहिता वर्तन्ते यत् ते अविवाहितेभ्यो-ऽप्यधिकम् अविवाहिता वर्तन्ते। तथा च आवयोः सदृशं प्राणिनस्तु विवाहं विनाऽपि असंख्यविवाहितेभ्योऽप्यधिकं विवाहिताः सुखिनश्च वर्त्तन्ते।"

सुशीलस्य वाग्जाले निमग्नाऽहम् अवशा सञ्जाता। नारीस्वभावस्य इयमेव दुर्बलता तु ताम् 'अबला' इति पदेन विभूषयति। ईषत्प्रेमाग्निरपि तस्याः सकलं संशयं भस्मासात् करोति।

दिल्ली-नगरस्य तस्मिन् यात्रा-प्रसङ्गे सुशीलो मम मनसि समुत्थितं संशयसर्पस्य शिरः सर्वथा ध्वस्तवान्। अहन्तु समाश्वस्ता जाता परन्तु मम माता…?।

× × × ×

अस्मिन् जीवने सुशीलमहोदयाऽनन्तरं मम जननी एव मम सर्वथा आश्रयभूमिः। जनन्यतिरिक्तं न कश्चिदपि मम सम्बन्धी वर्त्तते। अहं जनन्या समम् एकाकिन्येव स्वकीये कक्षत्रयात्मके गेहे बम्बईनगर्यां निवसामि। बम्बईमहानगरे तु गृहप्राप्तिरेव सुदुर्लभा परन्तु सुशीलस्याऽनुकम्पया एव मया चैतत् प्राप्तम्। एतस्मिन् गृहे सम्पूर्ण-सज्जासाधन-वस्तूनाम्प्रबन्धोऽपि सुशीलमहोदयेनैव सम्पादितः। अस्मिन् भवने एकः शयन-कक्षस्तु सर्वथा आवयोरेव कृते सुरक्षितः। सप्ताहे दिनद्वयं स मम समीपमेव गृहे निवसति।

मम जननी चक्षूंषि निमील्य कर्णौ च पिधाय सर्वं पश्यति श्रृणोति च। अद्य यावत् सा किमपि मां न प्रोक्तवती। परन्तु प्रायस्तस्या रुदतां चक्षुषां शून्यत्वं सर्वं कथयत्येव।

तस्मिन् वायुयानदुर्घटनाया दिने यदाऽहं वायुयानपत्तनस्थानात् गृहं प्रत्यागत्य जनन्याः समक्षं विलपन्ती सर्वम् उक्तवती तदा सा बाष्प-पूर्णाभ्यां नयनाभ्यां केवलम् इदमेव प्रत्युक्तवती—"हे भगवन् ! किम् इतिहासः पुनरावर्त्तनं विना न प्रवर्त्तते ?" ।

तदा तु नाऽहं किमप्यवगतवती । परन्तु साम्प्रतम्…? संभवतः त्रिवर्षपूर्वं मम जननी मां यद् उवाच तत्सन्दर्भे तस्या इयम् उक्तिर्यथाथतामेव भजति ।

'व्यक्तिगत-सहायक' पदस्य प्रशिक्षण-प्राप्त्यनन्तरमहं सद्य एव सुशीलमहोदयस्य समुद्रोद्भवानां मुक्तानां निर्यातव्यापारकार्यालये तस्य व्यक्तिगत-सचिवरूपेण तत्र द्विसहस्ररूप्याणां भृतिं लब्धवती । कतिपयेष्वेव दिवसेष्वहं तस्य कृपापात्रं सञ्जाता । सर्वप्रथमम् इदं बान्द्रास्थितं भवनं मया सुशीलमहोदयद्वारा प्रदत्तोपहाररूपेणाऽधिगतम् । एतद्भवनप्राप्ति-समकालमेव मम विद्यालयसखा श्रीरञ्जनदेवो मम जीवनाद् दूरीभूतः । वस्तुतः स स्वयं न दूरीभूतः प्रत्युत मयैव पृथक् कृतः । क्व खलु निम्नमध्यम-वर्गीयः श्रीरञ्जनदेवः ? क्व च खलु स कोटिरूप्याणां स्वामी व्यापारप्रवीणः श्रेष्ठिवर्यः सुशीलः ? ।

तदानीं मम जनन्यै संभवतो ममैष निर्णयो न रोचते स्म । सा किञ्चद् विरोधमिव कुर्वन्ती अवादीदपि—"सीमा ! श्रीरञ्जनदेवं तिरस्कृत्य त्वया साधु नाऽऽचरितम् ।"

"तस्याऽवलम्बनेनाऽपि को लाभः ?" अहम् अवादिषम् ।

"परन्तु सुशीलस्तुभ्यं 'तत्' कथमपि दातुं न प्रभवति यत् किल श्रीरञ्जनदेवो दातुं शक्नोति ।"

"'तत्' नीत्वा किम् अहम् अवलेहनं करिष्यामि ?' अहम् उत्तेजिता प्रत्युक्तवती । संभवस्तस्मिन् समये नाऽहं ज्ञातवती यत् जननीप्रोक्तं 'तत्' इत्यस्य किं तात्पर्यं वर्त्तते ।

"एतत्तु कश्चिद् भुक्तभोगी एवाऽवगन्तुं शक्नोति" माता प्रत्युवाच ।

"तदा किं त्वम्…?" अहं विस्मिता सती मातरम्पश्यन्ती स्थिता । स्ववाक्यमपूर्णं विहाय अहम् अर्थपूर्णं भयावहं च निमितवती । माताऽपि स्वकीयजीवनस्य कटुकमितिहासं मत्पुरतः प्रस्तुवती । अतिविचित्रैव तस्या अपि व्यथाकथा ।

मम विद्रोहिणी जननी कथं सम्पूर्ण परिवारं तिरस्कृत्य शिक्षां समाप्य कथं भृतिं लब्धवती ? तस्या एव कार्यालये सा स्वसहकर्मिणा समं प्रेम कुर्वन्ती कथं तं लब्धवती ? तस्या सहकर्मी विवाहितो वर्त्तते इति ज्ञात्वाऽपि सा तेन सार्धं कथ पति-पत्नी-सदृशं जीवनं यापयति स्म ?—इति सर्वम् इतिवृत्तं सा मां प्रोक्तवती ।

"त्वं तस्यैव पुरुषस्योपहारः" इथि कथयन्ती सा साश्रुनयना सञ्जाता । पुनः किञ्चित् संयता भूत्वा प्रोक्तवती—"कथमासीत् सा विचित्रा प्रेमान्धता ? एकतः संमग्रः संसारः एकतश्च केवलम् आवामेव । परिवारस्य प्रत्येकजनो वाञ्छति स्म यदहं स्वकीयं गर्भस्थं प्रेमप्रतीकं नष्टं कुर्याम् परन्तु तदहं कर्त्तुं नाऽशकम् । मया भग्नता वृता न तु नमनता स्वीकृता ।"

"मम जनकः क्वाऽस्ति ?"—अहं रुद्धकण्ठा तदानीम् अपृच्छम् ।

जननी स्वकीयहस्ताभ्यां पूर्वं मुष्टिकां बद्ध्वा पुनस्तम् उद्घाट्य ब्रवीति—"इयमेव तस्य प्रेम्णः परिणतिः ''' रिक्तौ हस्तौ !!" संभवतः स्वकीयाऽनुभूतिसन्दर्भे सा सत्यमेव प्रोक्तवती यत्—इतिहासः पुनरात्मानं प्रत्यावर्त्तते ।

जनन्याः मौनो विरोधो न मां मत्पथः विचलितुं कर्त्तुं प्राभवत् । तस्याः प्रत्येकस्या आपत्तेर्मम समीपे उत्तरमासीत् । ममाऽन्तर्मानसस्य प्रत्येक-समस्यायाः समाधानं मम समीपे बभूव ।

"त्वं यावज्जीवं कथमेवमेव वत्स्यसि ?"

"यथा साम्प्रतं वसामि ।"

"किं तुभ्यं किमप्यपूर्णमिव न प्रतीयते ?"

"न तथा प्रतीयते ।"

"त्वं सुशीलस्य पत्न्या समं विश्वासघातं तु न कुरुषे ? तव सुशीलेन सह प्रेमकार्यं सुधाया अधिकारक्षेत्रस्याऽतिक्रमणं तु न वर्त्तते ?"

"नैवम्, व्यापारकार्यं स्यात् प्रेमकार्यं वा, तत्रैकाऽधिकारस्य प्रवृत्तो-र्भर्त्सना अवश्यमेव करणीया । यदि सुशीलः मया समं स्नेहं विदधाति तदा तत्र सुधादेव्याः का हानिः ? सुशीलमहोदयस्तस्या उपेक्षां तु न कुरुते । तां पत्नीरूपेण पूर्णतया स्निह्यति मन्यते च ।"

वस्तुतः ममाऽन्तस्तलेऽपि कोलाहलः प्रवर्तते स्म । प्रश्नानां समूहा आक्रमणं कुर्वते स्म परन्त्वहं स्वतर्कखड्गैः सर्वान् खण्डयामि स्म ।

मया समं सुशीलमहोदयोऽपि आवयोः सम्बन्धानां निर्वाहकार्यक्रमे तथाविधां व्यवस्थां कृतवान् येन प्रत्येकः अभिनेता पृथक् पृथक् स्वतन्त्ररूपेण स्वकीयमभिनयं कुरुते स्म। तस्य सर्वाधिका सफलता इयमेव आसीद् यत् सुधादेवी अन्तिमं क्षणं यावत् न जानाति स्म यदहं तस्याः पत्युः उपपत्नी-रूपेण तिष्ठामि।

अहं बहुवारं तस्या गृहे अगमम्। कदाचित् कस्यचित् जन्मोत्सवप्रसङ्गे, कदाचित् कार्यालयीयकार्यवशात्। एकदा तु सुशीलमहोदयस्य ऽस्वस्थता-कारणात् प्रायः मासपर्यन्तं प्रतिदिनमेवाऽहं तस्य भवने गच्छामि स्म। तदानीं तस्य भवनमेव कार्यालयः समपद्यत। एतेषु सर्वेष्वेवाऽवसरेषु सुधा देवी मया समम् अत्यन्तम् आत्मीयतापूर्वकं सहृदयतापूर्वकं च व्यवहारं कृतवती। तस्या भावभङ्गिमया कदापि नैवं प्रतीयते स्म यत् सा मदीयकारणात् रुष्टा कुपिता वा वर्त्तते।

तदानीमहं चिन्तयामि स्म यत् नारी कियती सरलहृदया अन्ध-विश्वासिनी वा भवति यत् सा प्रेम्णः प्रकाशे स्वपरितः विकीर्णाम् असत्य-रूपिणीं कण्टकराशिमपि विलोकयितुम् असमर्था जायते।

× × × ×

अस्तु, जनन्याः सान्त्वनावचनानि आग्रहं च निशम्याऽहं कथं कथम-प्यात्मानं संयतां सहजां च कृतवती। सुशीलमहोदयस्य निधनाऽनन्तरं तु मम सर्वप्रथममिदमेव कर्त्तव्यमासीद् यदहं सुधादेव्याः समीपं शोकमभिव्यक्तं कर्त्तुम् अगमिष्यम्। यद् घटितमासीत् तत्तु सर्वमत्यन्तम् आकस्मिकम् अनभीप्सितं चासीत्। यत् किमपि मम जीवने सुशीलेन समं प्रवृत्तं व्यतीतं च तत्सर्वं मह्यं जलस्योपरि विरचितं रेखाङ्कनमिव प्रतीयते स्म।

अहं तस्य भवनं गतवती। सुधादेवी प्रसवचिकित्सालयात् गृहं प्रत्यागता आसीत्। तस्या वैधव्यं विलोक्य मया रोदनादिकमपि न कृतम्। संभवतः एवं करणेन ममान्तःस्थितश्चौरो बहिरागच्छेत्। तस्य भवनं ज्ञाति-सम्बन्धिभिः परिपूर्णमासीत्। पुनरपि सुधादेव्या समम् एकान्ते सम्मिलना-ऽवसरः प्राप्त एव।

अहं तस्याः पर्यङ्कस्य समीपस्थाम् एकां कुर्सीम् आसाद्य तत्रैव शिरः संनमय्य समुपविष्टा। भावाऽभिव्यञ्जनाय मम पार्श्वे तदानीं केवलम् अश्रूण्येवाऽवर्त्तन्त न तु शब्दाः। मदीयाऽश्रुबिन्दवो मम चौर्यं प्रकटीकर्त्तुं समर्था इति विचार्याऽहं पाषाणहृदया सती नेत्राऽपाङ्गैरेव निःशब्दं सुधादेवीं

पश्यन्ती तूष्णीं स्थिता। तस्याः मुखं श्वेतकुमुदनीव धवलं नयने च रोदनकारणात् पीने रक्ते चाऽऽस्ताम्। नवजातः शिशुः धात्र्या अङ्के विराजते स्म।

प्रथमं बारं मयाऽनुभूतं यत् आवयोर्मध्ये को भेदः? सा स्पष्टतया सर्वेषां समक्षं चीत्कारं कुर्वन्ती रोदितुं प्रभवति स्म, सर्वेषां शोक-सन्देशं समवेदनां सान्त्वनां चाऽधिगन्तुं समर्था बभूव। परन्तु अहम्...? अहं नैतत् सर्वं कर्त्तुं प्रभवामि। बहुकालपर्यन्तमहं तत्र मौनमवलम्ब्य स्थितवती। अन्ततः सैव मौनमपास्य वार्त्तालापं प्रारब्धवती। सा कातरेण स्वरेणाऽवोचत्– "त्वया सह मम सहानुभूतिरस्ति सीमे!"।

"मया एकः सुन्दरः कार्यस्वामी (बॉस) हापितः"—अनायासमेवाऽहम् उक्तवती।

"न केवलं कार्यस्वामी (बॉस) एव परन्तु त्वया तु बहु हापितम्। त्वया तु तावद् हापितं यत् तस्य गणितमपि कर्त्तुम् असम्भवम् अस्ति।"

तदाकर्ण्य त्वहमतिविस्मिता चकिता च सञ्जाता। ससम्भ्रमेण तदभिमुखमेवाऽहं निरूपयन्ती स्थिता। अन्ततः किं कथयितुमिच्छति सा?।

मम प्रश्नसूचकदृष्ट्या प्रेरणामिव समासाद्य सा पुनरब्रवीत्— "मम समीपे सुशीलमहोदयस्य सर्वस्वं वर्त्तते.. तस्य नामधेयम्; तत्प्रतिरूपौ द्वौ पुत्रौ, स्मृतयः; वित्तम्; व्यवसायः; व्यापारः...सर्वं तु वर्त्तत एव। किन्तु स एव रुष्टः सन् प्रस्थितः।"



"अधुना तु धैर्यधारणेनैव कार्यं चलिष्यति" अहम्पुनरनायासमेव प्रत्युक्तवती।

"अहन्तु धैर्यं धारयिष्यामि, परं ततोऽप्यधिकं त्वदीयविषये चिन्तयामि।"

"मम विषये भवती चिन्तां मा कुरुताम्।"

"अहं निर्णयं कृतवती यत् त्वम् अस्मिन्नेव व्यापार-कार्यालये (कम्पनी में) यथापूर्वं कार्यं करिष्यसि। मम सहोदरो दिल्लीनगरात् समागतो वर्तते।

स सुशीलमहोदयस्य सर्वं व्यापारकार्यम् अवलोकयिष्यति । त्वं तस्यैव साहाय्यं सम्पादयिष्यसि ।''

''अतिशयधन्यवादा भवत्यै । अहम् एनम् उपकारं यावज्जीवनं न विस्मरिष्यामि ।''

''न हि सीमे ! न मया तवोपरि कश्चिदुपकारः कृतः । एतत्सर्वं त्वहं तेषाम् (सुशीलमहोदयानाम्) आत्मनः शान्तिप्रदानार्थं सम्पादयामि ।''

''किं तात्पर्यम् ?''—अहम् अत्यन्तम् उद्विग्नतापूर्वकम् पृष्टवती ।

''ते त्वया समं वस्तुतोऽत्यन्तम् अन्यायं कृतवन्तः । सर्वं तु मह्यं प्रदत्तवन्तः किन्तु तुभ्यम्...? यदि च तेषां महाप्रयाणाऽनन्तरं तव किमपि कष्टं भविता तदा ते मां कथमपि क्षमां न करिष्यन्ति ।''

तत्सर्वम् आकर्ण्य अकस्मादेव मम चेतना प्रत्यागता । किम् अहं सुशीलमहोदयश्च कस्मिश्चिद् अन्धकारे न्यवसाव ? संभवतः सुधामहोदया तु आवयोः सन्दर्भे सकलं वृत्तं जानाति ! । पुनरप्यहम् आत्मनोऽनुमानस्य सम्पुष्ट्यर्थम् अस्फुटेनैव स्वरेण पृष्टवती—''किं भवती सर्वं...?''

''सर्वं जानाम्यहं सीमे ! सर्वमहम् अवेदिषम् । नारी सरलहृदया भवितुं शक्नोति परन्तु एतावती मूर्खा ज्ञानहीना च न भवति यत् सा स्वकीयप्रेम्णो विभाजनस्याऽऽभासमपि न प्राप्नुयात् ।''

''पुनरपि भवती ...?''

''पुरुषस्य मानसं पर्वतस्य निर्झरश्चाऽत्यतं वेगवन्तौ भवतः । एतयोर्गतेरवरोधस्य चेष्टा नितान्तं दुःसाहसपूर्णा मूर्खता भवति । एतस्य परिणामः सुखदो न भवति । यस्योपरि वशं नास्ति तत्र पश्चात्तापकरणे परिदेवने च को लाभः ? यत्किमपि प्राप्तं वर्त्तते तदर्थंमेव परमेश्वराय धन्यवादः । परिपूर्णता प्राप्त्यर्थं साम्प्रतं विद्यमानस्य हापनमपि मूर्खतापूर्णमेव वर्त्तते ।'' इत्युक्त्वा सुधादेवी दीर्घं निःश्वस्य शान्तं स्थिता ।

अहं निर्निमेषाभ्यां नयनाभ्यां तां त्यागमूर्तिं विशालहृदयां नारीं पश्यन्तीमतिष्ठम् । तस्या महत्तायाः समक्षम् आत्मानमहं वामनामिवं कल्पयामि स्म । तदानीमेव मदीयम् अन्तर्मानिसं मां धिक्कुर्वदिव प्राह— त्वदीयं

जीवनदर्शनम् अपूर्णम् एकाङ्गि चाऽऽसीत् । आत्मनः स्वार्थाय त्वया चौर्यम् आचरितम् । चोरीकृतस्य वस्तुनः स्वादः कश्चिदन्यथैव भवति किन्तु तस्य परिणामः ? ।

अहं चिन्तयितुम् आरब्धवती—श्रीरञ्जनदेवो बहुकालात् दृष्टिपथं नाऽऽगतः किं स साम्प्रतमपि मह्यम् उपलब्धो भविष्यति ? यदि स मिलेदपि तदा स किं मां स्वीकरिष्यति ? ।

पुनरेवाऽहं पूर्ववत् प्रश्नसमूहैः परिवृता तिष्ठामि । मम समीपे उत्तराणि नाऽऽसन् प्रत्युत केवलं प्रश्ना एव मुखं व्यादाय विराजन्ते स्म ।।

• • •

# शुभदा दीर्घसूत्रता

श्री रामदेवस्य सन्दर्भे न केवलं मम एव अपितु प्रायः सर्वेषामेव जनानाम् अयं विचार आसीद् यद् एष महानुभावः संसारस्य सर्वाधिकः स्वार्थी, धूर्तः, कृपणः, लोलुपश्च जीवो वर्त्तते। अन्ये तु बहुकालाऽनन्तरं निष्कर्षमिमम्प्राप्तवन्तः किन्तु मया तु द्वादशवर्षस्याऽवस्थायामेव तेषां सन्दर्भे पूर्वोक्ता धारणा मनसि स्थिरीकृता।

अस्माकं पितृमहोदयाः तेन समं व्यापारं कुर्वाणाः सहभागितया (साझे में) आपणे तिष्ठन्ति स्म। अत एव अहं तं पितृव्यं मत्वा सर्वदैव 'चाचा' इति शब्देनैव सम्बोधनम् अकरवम्। संसारे एवंविधा अल्पीयांस एव दुर्भाग्यसम्पन्ना भवन्ति ये किल श्रीरामदेवसदृशं पितृव्यं प्राप्नुवन्ति। परं मया तु प्राप्त एव। अस्माकं पितृचरणानां यदा देहान्तः समजायत तदा इमे पितृव्याः श्रीरामदेवमहोदयास्तच्छ्रुत्वा तथैव सहाहाकारं रोदनम् अकार्षुः यथा तैः स्वकीयमृत्योरेव समाचारः श्रुतः स्यात्। परन्तु एतद्दुःखदायक-त्तान्तात् दिनत्रयाऽनन्तरमेव पितृव्यतुल्यानां श्रीरामदेवमहोदयानां कर्कश-

मय्यां वाण्याम् अहं सूचितोऽभवं यद् यदि जीवने कथंचिन् निर्वाहः करणीय-स्तदा तेषामेव आपणे समागत्य मया भृत्यता स्वीकरणीया।

तस्मिन्नेव दिवसे मया इदमपि ज्ञातं यत् श्रीरामदेवमहोदयेन छलप्रपञ्च-पूर्वकं मम पितुरापणे सहभागित्वम् अपास्य पूर्णतया स्वकीयमेवैकाधिकारं स्थापितवन्तः। यद्यपि तस्मिन्नापणे मम पितृमहोदयानामपि पञ्चाशत्प्रतिशतं भागधेयमासीत् किन्तु तेषां निधनाऽनतरमेव न जाने केन प्रकारेण श्रीरामदेव-महोदयो मम पितृचरणानाम् अधमर्णत्वं प्रदर्श्य तस्मिन्नापणे पूर्णतया स्वत्वाधिकारं प्रतिपादितवान्। अस्तु, किमपि कर्त्तुम् अक्षमोऽहं निरुद्देश्य-मितस्ततः परिभ्रमन् मनुष्याणां धूर्त्ततां स्वकीयां विवशतां तमःपूर्णं भविष्यं च यदा चिन्तितुमारब्धवान् तदा एतमेव निष्कर्षम्प्राप्तवान् यत् अहमत्यन्तम् असहायः दुर्भाग्यसम्पन्नो युवकोऽस्मि। जीवनाय च पितृव्यतुल्येन श्रीरामदेव-महोदयेनैव समं किमपि सामञ्जस्यं स्थापनीयम् भविष्यति।

अन्ततः मया तेन समं कथं कथमपि सामञ्जस्यं स्थापितम् एव।

आपणस्य कुञ्जिकां प्रयच्छन्तस्ते माम् उक्तवन्तः—"त्वं मम प्रिय-मित्रस्य एकमात्रः पुत्रोऽसि, निर्धनोऽसि, असहायोऽसि, अत एव तव साहाय्यं मम कर्त्तव्यम् इति मत्वाऽहम् आपणे भृत्यरूपेण नियोजनं करोमि। परिश्रमः सत्यनिष्ठा चेति द्वाविमौ तव कर्त्तव्यौ। यस्मिन् दिनेऽहं ज्ञास्यामि यत् त्वम् आपणव्यवहारे तत्रस्थे व्यापारवित्ते च अन्यथा इतस्ततश्च किमपि करोषि, तस्मिन्नेव दिवसे तवाऽवकाशो भविष्यति"—इत्युक्त्वा ते स्वकीयदक्षिण-हस्तस्याङ्गुलिभ्यां चुटकीनादम् अकुर्वन्।

अहं तेषां चुटकीनादं सदैव स्वकीयचित्ते स्मरामि स्म। मध्याह्न-भोजनकालाऽनन्तरं मां गाढनिद्राऽत्यन्तं बाधते स्म किन्तु श्रीरामदेवमहोद-यानां चुटकीनादं स्मृत्वा साऽपि न जाने क्व पलायिता भवति। प्रातः सप्तवादनाद् आरभ्य सायं सप्तवादनपर्यन्तमहं तत्परो भूत्वा न केवलम् आपणे सनद्धः सन् अतिष्ठम् अपितु धावं धावं ग्राहकाणाम् अनुज्ञामप्य-पालयम्।

बहुकालपर्यन्तं तु तेषां चुटकीनाद एव मम निरन्तरपरिश्रमस्य कारणं बभूव। परन्त्वेकस्मिन् दिने न जाने कथम् एतस्य संकटस्य तत्रैकाऽन्याऽपि प्रेरणा प्रादुर्भूता। अस्या प्रेरणायाः नामधेयम् आसीत्—'सुभद्रा'। सा त्वकस्मादेव प्रादुर्भूय सहसा मदीयमनसोऽन्तस्तले प्रविष्टा।

सुभद्रा श्रीरामदेवमहोदयस्यैकमात्री दुहिता आसीत्। सप्तदशवर्षीया

सा बाला रूपवती मृदुभाषिणी चाऽभवत्। अहम् आपणस्य कार्यवशात् प्रायः श्रीरामदेवमहोदयस्य गृहे प्रत्यगच्छम्। यदैवाऽहं तत्राऽगमं तदा सैव द्वारमुद्घाटच मां दृष्ट्वा विहस्य व्यवहरति स्म। अहं तु तस्याः शोभनव्यवहारेण सौन्दर्येण च मुग्धः सन् इदमेव विचारयामि स्म यत् श्रीरामदेवसदृशस्य धूर्त्तस्य दुष्टस्य च सुता कथमेतादृशी सुरूपा, गुणवती, मनोहारिणी, व्यवहारकुशला च समजायत।

अस्तु, सम्भवतः श्रीरामदेवमहोदयेनाऽपि किमपि अवगतमेव यत् का स्थितिः वर्तते। एकदा त्वहं सायंकाले आपणं संवृत्य यदा गृहं गन्तुकामोऽभूवं तदैव श्रीरामदेवमहोदय उक्तवान्—"किम् भोः! साम्प्रतं पश्यामि यत् त्वया बहुपरिश्रमः क्रियते। प्रातः सप्तवादनात् प्रागेव समागच्छसि, रात्रौ च पर्याप्तम् अत्र तिष्ठसि?"।

अहं सादरम् प्रत्यवोचं—"पितृव्य! अहं भवतां समक्षम् आत्मानं कर्त्तव्यनिष्ठं परिश्रमिणं च सिद्धं कर्त्तुमिच्छामि।"

"पश्य! मां मूर्खं मन्यसे! सत्यं कथय! ह्यस्तने रात्रौ त्वं कुत्र आसीः?"—स तर्जयन्निव प्रोवाच।

"ह्यस्तन रात्रौ···?" अहं ससम्भ्रम् उक्तवान्—"अहं तु मोतीनगरे स्वनिवासस्थाने एवाऽभूवम्। तत्रैवाऽहं रात्रिं यापयामि। तत्रैकः कक्षो मया भाटके नीत इति तु पूर्वमपि मया भवते निवेदितम् आसीत्।"

"ह्यस्तने रात्रौ त्वं चलचित्रं द्रष्टुं चलचित्रालये गतवान्" स गर्जन्निव प्रोवाच।

तन्निशम्य मन्ये मम हृदयम् उत्प्लुत्य कण्ठे समागतम्। यतोहि तत्प्रदत्ता सूचना यथार्थम् आसीत्। घूर्णयन्निव पितृव्य श्रीरामदेवः पुनरुक्तवान्—"अहं सर्वं जानामि। त्वं सुभद्रामाध्यमेन मम सर्वं व्यवसायं हस्तगतं कर्त्तुमिच्छसि। परन्तु सावधानं शृणुष्व। तवाऽयं स्वप्नः कदापि सत्यो न भविष्यति। अहं स्वकीयसुतायाः पाणिग्रहणं केनचित् त्वादृशेन दरिद्रेण मूर्खेण युवकेन समं तु कथमपि नैव करिष्यामि। भविष्यत्काले सदैव स्मर्त्तव्यं यत् यदि त्वया अत्र भृत्यता करणीया तदा तथाविधैः क्रियाकलापैः सदा दूरमेव भवितव्यम्। अन्यया तव···" इत्युक्त्वा स भयप्रदायकं तमेकं चुटकीनादं मत्पुरतः प्रस्तुतवान्।

"पितृव्य! भवान् अज्ञानतां भ्रमं व समुपगतः। मम तु सुभद्रया सार्धं

केवलं सामान्यमित्रता वर्त्तते। मयि विश्वासं करोतु। नाऽहं भवदीयं व्यापारं हस्तगतं कर्त्तुमिच्छामि, न चाऽपि मम तथाविधः कश्चित् मनोरथः कल्पना वा।" इत्यहं याच्ञापूर्वकं तत्समक्षं विनयावनतो निवेदितवान्।

"अपरञ्चेदम्" स पुनराह—"परश्वस्तने दिवसे अस्माकमापणः सपादसप्तवादने समुद्घाटितः सञ्जात। निर्धारितसमयात् पञ्चदशमिनटाऽनन्तरम्। मया त्वं बहुवारम् उक्तो यद् व्यापारे समयस्य तत्परता महत्त्वपूर्णा भवति। समयसौविध्यायैवाऽहं सर्वाः कुञ्जिकाः तुभ्यं प्रदत्तवान्। पुनरपि त्वं विलम्बायसे। न जाने कियन्तो ग्राहका निराशा भूत्वा प्रतिनिवर्त्तन्ते। यद्यहं नववादने तत्रागच्छामि तदा चाऽस्य नेदं तात्पर्यं यत्त्वमपि विलम्बेन समागच्छ, ममाऽऽपणश्च विलम्बेन समुद्घाटितः स्यात्।" पुनरप्यग्रे ते तर्जयन्त इव प्रावोचन्—"यदि चाऽग्रे भविष्यत्कालेऽपि तव तथैव व्यवहारो भविष्यति तदा तवाऽवकाशाय विचारोऽपि करिष्यते।" इत्युक्त्वा स्वकीयाङ्गुलिभ्यां चटकीनादं कुर्वन्तः स्वकीयमुष्णीषं शिरसि धारयन्तः गृहं प्रस्थितवन्तः।

तं गृहं गच्छन्तं विलोक्य तत्क्षणमेवाऽहम् आपणादेव तद्गृहे दूरभाषं कृतवान्। सुभद्रा दूरभाषयन्त्रं गृहीतवती। अहं ताम् उक्तवान्—"प्रिये! सुभद्रे! पितृव्यो जानाति यत् त्वं मया समं ह्यस्तने रात्रौ चलचित्रं द्रष्टुं गतवती"।

सुभद्राया हास्यध्वनि र्दूरभाषे अश्रूयत। सावदत्—'तर्हि किम् अभूत्? अत्र भयस्य किं कारणम्?"।

"त्वं चेतनाऽवस्थायां तु वर्त्तसे? किं न जानासि? अहं तस्य भृत्यो भवामि। स चुटकीनादं कृत्वा तत्क्षणमेव मां भृत्यत्वेन पृथक् कर्त्तुं शक्नोति।" अहम् अतिचिन्तितः प्रोक्तवान्।

"मन्ये तव मस्तिष्कं भ्रान्तं वर्त्तते। त्वं कथमेतावद् भीरुत्वम् आचरसि? अन्ततः कस्माद् भयम्? स तव केवलं स्वामी न हि प्रत्युत पितृव्योऽपि वर्त्तते। तथा च त्वं वारं वारं चुटकीनादस्य चर्चां कथं कुरुषे?"।

मया दूरभाषयन्त्रं प्रक्षिप्तम्। सुभद्रया समं वार्त्ताकरणं व्यर्थमेवाऽऽसीत्। सा वस्तुस्थितेर्गम्भीरतां न जानाति स्म, न च ज्ञातुमुत्सुका दृश्यते स्म। बहुकालपर्यन्तमहं हस्तयोः शिरो निधाय चिन्तामग्न एवाऽतिष्ठम्। अत्र द्वे

समस्ये आस्ताम्—भृत्यता प्रेमकार्यं च। उभे अपि पितृव्येन श्रीरामदेवेन समम् अत्यन्तं प्रगाढतया सम्बद्धे भवतः।

× × × ×

एकसप्ताहाऽनन्तरं पितृव्यः श्रीरामदेवः आपणस्य षाण्मासिकम् आय-व्ययं निरीक्षतवान् तत्र च गणितं कृत्वा पञ्चशतरूप्यकाणां न्यूनत्वम् अवलोकितवान्। तेषां दृष्ट्यां त्वियं साधारणघटना नाऽऽसीत्। तत् निपुणं निरीक्ष्य आय-व्ययपुस्तकं दूरं प्रक्षिप्य उक्तवन्तः—"नेदं चलिष्यति भो! कथमपि न चलिष्यति"।

"परम् अत्र किमहं वक्तुं शक्नोमि? पितृव्य! मन्ये बैङ्के रूप्यादि-प्रदाने भवतामेव काऽपि त्रुटिः स्यात्, संभवतः कुत्रचिद् गणनायां दोषः स्यात्, अथवा भवान् एव किमपि क्वचिद् विस्मृतो भवेत्..." अहम् आश्चर्यचकितः किन्तु निर्दोषभावं मुखे समानीय प्रत्युक्तवान्। ते स्वशिरोरुहान् लुञ्चन्त इव—"किं त्वं मां गर्दभं मन्यसे? अहं मूर्खो नाऽस्मि, सर्वं जानामि। इतः परमेतत् सर्वं चक्रं न चलिष्यति। यदि एकमपि रूप्यकमितस्ततो भविष्यति तर्हि अहं तत्कालमेव तत्राऽवकाशं विधास्यामि" इत्युक्त्वा माम् अभिलक्ष्य स्वकीयाङ्गुलिभ्यां पुनस्तमेव भयप्रदं चुटकीनादं कृतवन्तः। किञ्चिद् विरम्य च पुनरब्रुवन्—

"अद्यैव केनचिद् ग्राहकेणाऽहं दूरभाषद्वारा सूचितो यत् ह्यस्तने दिवसे आपणः दशमिनटविलम्बेन समुद्घाटितः। इतः परं यद्यापणस्य समुद्घाटन-मेकमिनटपर्यन्तमपि विलम्बेन भविष्यति तर्हि..." इत्युक्त्वा ततः परं भावनाऽतिरेकात् ते किमपि वक्तुं न प्राभवन्।

अहं तेषामादेशमाकर्ण्य स्वीकारसूचकं शिरोनमनं विधाय प्रत्युवाच यदितः परम् आपणस्य आय-व्यये नकस्याऽपि रूप्यस्य अन्यथाभावो भविष्यति नाऽपि च कदापि आपणो विलम्बेन समुद्घाटितो भविष्यति।

रात्रौ सुभद्रा मम समीपे यदा समागता तदाऽहं तां सर्वं वृत्तान्तं कथितवान्। स धैर्यपूर्वकं सम्पूर्णां घटनामाकर्ण्य ब्रवीति—"पुनस्तदेव भयम्...? पञ्चशतरूप्यकाणां धनं तथाविधं तु न वर्तते यत् एतस्मै तव पितृव्यमहोदयाः पुलिसस्थानं गत्वा सूचयिष्यन्ति।"

"एकदा ते पुलिसमपि सूचयिष्यन्ति। त्वं प्रतीक्षस्व...यदा चाऽहं निगृहीतो भविष्यामि तदैव त्वं ज्ञास्यसि...। जानासि? तानि पञ्चशतरूप्य-काणि क्व गतानि?" अहं प्रात्रोचम्।

'जानामि, सर्वं जानामि। तानि रूप्याणि त्वया ममोपरि व्ययी-कृतानि।'' सा मधुरं विहस्य माम् अब्रवीत्।

अहं तस्याः सत्याऽनुमाने चकितः सञ्जातः। 'अहो! सुभद्रे! कथं तव प्रेमपाशेऽहं निमग्नः! तव सौन्दर्यमेव मम दौर्बल्यम्। यदि त्वं मम पथि अवरोध इव नाऽऽगमिष्यस्तर्हि पितृव्यमिमं पराभूतं विधाय नगरं चेदं परित्यज्य क्वचिदपि पलायितोऽभविष्यम्। कश्चिदपि मम किंचिदपि कर्त्तुं न क्षमः। अहं तस्माद् आपणात् सहस्राण्यपि रूप्यकाणि नीत्वा पलायितुं समर्थः, रात्रावेव सर्वमेवाऽऽपणं विक्रीय क्वचिदपि गन्तुम् अशकम्……किन्तु जीवने तवाऽऽगमनेन मम सर्वाऽपि योजना ध्वस्ता सञ्जाता।'' इति ताम् उक्तवान्।

सा मन्दं विहस्य कुतूहलेन व्यग्रचित्तेन च प्रत्युवाच—''अस्तु, त्वम् आर्थिकरूपेण कदा तथाविधः सुदृढो भविष्यसि यन्मया समं विवाहं कर्त्तुं प्रभविष्यसि ?''।

''यस्मिन् दिने पितृव्यमहोदयाः मां विलोक्य चुटकीनादं कर्त्तुं त्यक्ष्यन्ति''—इत्युक्त्वाऽहं स्वकीयशत्रोः सुतां बाहुभ्यां निबद्धां कृतवान्।

× × × ×

पञ्चदिनाऽनन्तरं प्रलय इव प्रावर्त्तत। यदाऽहम् प्रातरुत्थितस्तदा गवाक्षात् सूर्यरश्मयो गृहे समागच्छन्ति स्म। अहम् उत्प्लुत्य विष्टराद् उत्थितः। घटिकोपरि यदा दृष्टिं कृतवान् तदा मम चक्षुषोः समन्ताद् अन्धकार इव समजायत। तदानीं सार्धसप्तवादनसमय आसीत्। अहं मनस्यालपन्नेवम् उक्तवान् ''प्रिय! भ्रातृव्य!! अद्य निर्णयो जातः। त्वं नववादनपर्यन्तमेव तत्रापणं प्राप्स्यसि। तत्र च तव दुष्टः पितृव्य एकेनैव प्रलयंकारिणा दर्शनेन त्वां भस्मसात् करिष्यति। आपणः पूर्णतया घण्टाद्वया-त्मकेन विलम्बितसमयेन समुद्घाटितो भविष्यति। पितृव्यस्य पार्श्वे तु केवलं मुख्यद्वारस्यैव कुञ्जिका वर्त्तते। अन्याः समस्ताः कुञ्जिकास्तवैव पार्श्वे वर्त्तन्ते। सर्वा लम्बमञ्जूषाः (आलमारियाँ) पिनद्धाः सन्ति। दृढमञ्जूषायाम् (तिजोरी) अपि विष्कम्भकयन्त्रं (ताला) वर्त्तते। दर्शनीयमञ्जूषाणाम् (शो केश) अपि कुञ्जिकास्तवैव समीपे विराजन्ते। तत्र सर्वम् अनावृतं विद्यते। अस्तु……चल तत्र चलितव्यं तु वर्त्तत एव। यत् किमपि भविष्यति तद् द्रक्ष्यते।''

अस्तु, यथाशीघ्रं सर्वं दैनन्दिनं नित्यकार्यं सम्पाद्याऽहं सज्जो भूत्वा

आपणे गमनाय नगरबसयानमासादितुं धावन्निव गृहान्निर्गतः । मां तथाविधं ससम्भ्रमं धावन्त विलोक्य मार्गे पथिका अपि स्तब्धा आसन् । अस्तु, ईश्वर-कृपया बसयानं सद्य एव समक्षम् उपागतम् । यदा आपणः केवलम् एककिलो-मीटर पर्यन्तं दूर आसीत् तदा न जाने कथं बसयानस्य यन्त्रं विचित्रां ध्वनिं कृत्वा स्थगितं सञ्जातम् । बसयानचालकस्तत्सर्वं किञ्चिन्निरीक्ष्य प्रोक्तवान् यत् सम्प्रति बसयानम् अग्रे गन्तुं न शक्नोति । तस्य वचनमाकर्ण्य सहसा तमहम् आक्रुष्टवान्—'कथं न गन्तुं शक्नोति'' ।

मम आक्रोशं श्रुत्वा बसयानचालकेन सह अन्येऽपि सहयात्रिणः हसितुम् आरब्धवन्तः । अहं स्वकीयाम् अस्वस्थचित्तताम् उद्विग्नतां ससम्भ्र-मतां चाऽवलोक्य स्वयमेव क्षुब्धः सन् बसयानाद् अवातरम् । यद्यपि तत एककिलोमीटरपर्यन्तं पन्था कश्चिदधिको दूरो नाऽभवत् परन्तु तद्दिवसे तु स माम् एकशतकिलोमीटरपर्यन्तं प्रतीयते स्म । त्वरितं गच्छतो मम शताब्दा इव व्यतीताः । अन्ततः अहं तं चत्वरस्थानम्प्राप्तवान् एव यस्य दक्षिणतो मम आपण आसीत् । आपणमभि दृष्टिक्षेपसमकालमेव मम हृदयगतिरव-रुद्धेव सञ्जाता । यतोहि तत्र सर्वतः पुलिसविभागस्य कारयानानि आसन् । इतस्ततश्च ते पुलिसविभागस्थाः कर्मचारिणो गमनाऽऽगमनं कुर्वाणा दृश्यन्ते स्म ।

अहं कम्पमानैश्चरणैरापणाऽभिमुखं प्रचलितः । न जाने किं भवित-व्यम् आसीत् ? संभवतः पुलिसजना मां धनाऽनियमितताया (गबन) अभियोगे निग्रहीतुं समागताः स्युः ? किन्तु साम्प्रतं तु पलायनविचारोऽपि न केवलम् असंभवः, अपि तु व्यर्थोपि वर्त्तते स्म । अहं स्वकीयकल्पनायाम् आत्मानं कारागृहाऽभ्यन्तरे स्थितं, सुभद्रां च कारागृहस्य बहिः स्थित्वा रोदनं कुर्वन्तीं पश्यामि स्म, पितृव्यं श्रीरामदेवं च तत्रैव सहाहाकारं हसन्तम् अपश्यम् ।

यथा यथा पुरतो गच्छन्नहम् आपणस्य द्वारे समुपस्थितस्तदैव तत्र पितृव्यः श्रीरामदेवमहोदय एकेन पुलिसनिरीक्षकेण सह आपणाभ्यन्तरात् बहिर्निःसरन् मम दृष्टिपथमागतः । ततश्च मयि दृष्टिन्याससमकालमेव स अङ्गुल्या मां दूरत एव निर्दिशन्नाह—''अयमेवास्माकं भ्रातृव्यतुल्यो भृत्यः श्रीमन् !'' —इति तच्छ्रुत्वा मां पृथिवी कम्पमानेव प्रतीयते स्म । मन्ये तेन माम् अभिलक्ष्य कथञ्चिद् अपराधिरूपेण संकेतितः स्यात् ? अधुना किं भवितुम् अर्हति ? ।

"अनेनैवाऽहमद्य सुरक्षितः श्रीमन् !, अन्यथा त्वद्याऽहं नष्ट इवाभविष्यम्" इति वाक्यं यदाहं पितृव्यमुखात् श्रुतवान् तदा मम कर्णयोर्विश्वास एव न सञ्जातः। ते अग्रेऽपि कथयन्त आसन्--"आपणे दृढमञ्जूषायां नवतिसहस्राणि रूप्याणि आसन्। यदि विष्कम्भकयन्त्रस्य कुञ्जिका मम पार्श्वे अभविष्यत् तदा ते लुण्ठाका दस्यवो मम सर्वं धनं हृत्वा अगमिष्यन्। यदि चाऽयं मम भ्रातृव्यः समये समागमिष्यत् तर्हि अहमद्य निजसम्पूर्णजीवने समुपार्जितेन वित्तेन विहीनोऽभविष्यम्। कियत् सुन्दरमभूद् यदद्याऽयम् पर्याप्तं विलम्बेन समायातः !!"।

"अहो ! साधु सम्पादितं त्वया युवक ?" इत्युक्त्वा मम स्कन्धौ स पुलिसाधिकारी शनैः पीडितवान्। तदनन्तरं च स पितृव्याभिमुखो भूत्वा प्रोक्तवान्—"किमयमेवासौ भवतां भ्रातृव्यो वर्त्तते यं भवन्तः कतिचित् कालं पूर्वं स्वकीयसुतायाः भाविनं पतिम् उद्घोषयन्त आसन् ?"।

तच्छ्रुत्वा पितृव्याः श्रीरामदेवमहोदयाः सकोपं तम् अधिकारिणं दृष्टवन्तः। तदनन्तरं मय्यपि तीक्ष्णां दृष्टिं विन्यस्य सपद्येव ते आपणाभ्यन्तरे प्रविष्टवन्तः।

पुलिसाधिकारिणस्तु तद्वाक्यं समाकर्ण्य मम मनसि प्रमोदस्य कियान् परावारः समुद्भूत इति तस्य तु केवलं कल्पनैव भवद्भिः कर्त्तुं शक्यते ॥

• • •

# अद्भुतकुञ्जिका

केचन जना एवमपि भवन्ति येषां कथा हृदयमाह्लादयति। तान् निरीक्ष्य स्वत एव आनन्दानुभूतिः समुदेति मनसि च तान् प्रति स्वतः शुभकामनाभावः प्रतिभासते।

सुखदा-प्रेमपालयोश्च कथाऽपि तथाविधैव वर्त्तते। एष युगलो यदाऽस्माकं प्रतिवेशिरूपेण समागतस्तदानीन्तनादेव तयोः सन्दर्भे नानाप्रकारकाः कथाः प्रचलिता बभूवुः। तौ परस्परम् अतिशयस्नेहपूर्वकं सदैव व्यवहारं कुर्वाते स्म। सुखदायाः पतिर्यदा कार्यालयात् प्रतिनिवर्त्तते स्म तदा तौ कदाचित् उपोद्याने (पार्के) परिभ्रमन्तौ कदाचित् चलचित्रालयादागच्छन्तौ कदाचित् कोकाकोलाया बोतलपात्रं पिबन्तौ कदाचिच्च कस्मिंश्चित् काफीभवने काफीपानं कुर्वन्तौ स्मयमानौ प्रसन्नचित्तौ च सदैव स्वकीयं समयं यापयेते स्स।

अहं तं युगलं प्रथमं वारं तदैव व्यलोकयं यदा सस्वपत्या समम् एक-

स्मिन् आपणे किमपि क्रेतुं समागता । अहं स्वपतिम् अतिशयं स्निह्यामि स्म परन्तु सुखदामवलोक्यैव मया ज्ञातं यत् मत्तोऽप्यधिका अन्येऽपि युगला स्वकीयजीवने सानन्दाः सम्प्रहृष्टाश्च विद्यन्ते ।

उभावपि तौ पतिपत्न्यौ परमसुन्दरौ स्मेरमुखौ स्वस्थशरीरौ गौरवर्णौ च बभूवतुः ! एतादृशा युगलाः प्राय अल्पीयांस एव संसारे प्राप्यन्ते । बहुधा दृश्यते यत् किल यदा पतिः सुव्यवस्थितः सुन्दरश्च भवति तदा तस्य पत्नी सौन्दर्यविहीना मूर्खाऽव्यवस्थिता च भवति । यदा च क्वचित् पत्नी रूपवती निपुणा चतुरा च भवति तदा तस्य पतिः कुरूपोऽव्यवस्थितो मन्द-बुद्धिश्च दृश्यते । परम् अत्र त्वेवं प्रतीयते स्म यदुभावपि तौ अन्योन्यार्थमेव यथा निर्मितौ भवतः ।

तस्मिन्नापणे एव मम पतिस्तं युगलमालक्ष्य परिचयं कारयितुकामो माम् एवम् अब्रवीत् - "एतेऽस्माकम् अभिनवाः प्रतिवेशिनः सन्ति । किं त्वम् एतान् जानासि न वा ?" ।

"आश्चर्यम् !! भवान् एतान् जानाति परन्तु अहम् एतान् नाऽद्यावधि ज्ञातवती"—अहं स्मयमाना प्रमुदिता प्रत्युवाच ।

"तत्र कारणमेतद् वर्त्तते यत् यदा काचित् सुन्दरी युवतिरस्माकं प्रतिवेशिनीत्वेन समागच्छेत् तदा मादृशानां दृष्टिपथे सा कथमपि तिरोहिता प्रच्छन्ना वा भवितुं कथं समर्था भवेत् ?" मम पतिर्मन्दं विहस्याऽब्रवीत् ।

अहं स्वपत्युर्वचनमाकर्ण्य मन्दं मन्दं हसितवती । अस्माकं पतिरेवमेव मनोरञ्जकवार्त्ताप्रियः परिहासपेशलश्च वर्त्तते । अस्तु, अहन्तु तया सम्मिलि-तुम् अत्युत्सुकाऽभूवम् । अहमिच्छामि स्म यत् कथमपि सुखदया सार्धं मम मित्रता भवेत् । तदर्थमकस्मादेव चैकः सुन्दरोऽवसरश्चाऽपि मया सम्प्राप्तः एव । एकदा तस्या गृहे पानीयं न समागतम्, अत एव सा पानीयं नेतुं मम गृहे समागता । तदनन्तरम् आवयोर्मध्ये पर्याप्तं वार्त्ताः प्रगाढमैत्री च स्वत एव समवर्त्तत शनैः शनैरावां च मध्याह्नसमये परस्परम् अन्योन्यस्य गृहे गन्तुम्प्रारब्धवन्तौ ।

सुखदायाः पतिः श्रीप्रेमपालः शिष्टः सौम्यो विद्याप्रियो वार्त्तालाप-कुशलः सभ्यश्च युवक आसीत् । सुखदाऽपि गृहकार्यनिपुणा स्नातकोत्तर-परीक्षासमुत्तीर्णा च बभूव । सुखदा तु स्वकीय-गृहस्याऽऽर्थिकीं स्थितिं" सम्पन्नतरां विधातुं क्वचित् कार्यं कर्त्तुं समीहते स्म परन्तु प्रेमपालस्तदर्थं

नैवाऽनुमतिं प्रददाति स्म—इति त्वहं तया सह वार्त्तालाप-प्रसङ्गे एव ज्ञातवती ।

अस्तु, एकदाऽहं मध्याह्नकाले सुखदाया गृहे एवमेव तां मिलितुं गतवती । तदानीं साऽतितराम् उद्विग्नाऽसहजा चिन्तातुरा च प्रतीयते स्म । मामवलोक्य सा किञ्चित् स्मितवदना भूत्वा स्वागतं कृतवती पुनरपि तस्या मुखे विद्यमाना मन्दस्मितिरपि तस्याः पर्याकुलतां ध्वनयति स्म । सा मां सोफासने साग्रहं समुपवेश्य स्वयं च तस्य सोफासनस्य पृष्ठत एव किमप्यन्वेष्टुकामा समजायत । 'का वार्त्ता ? किमपि वस्तुजातं मन्ये न मिलति यत् त्वम् एतावतीम् उद्विग्नताम् आवहसि । किम् मार्गयसि ?" अहं पृष्टवती ।

"एवम्, एकम् अतिमूल्यवत् वस्तु तिरोहितं वर्त्तते मम । तदेव चाऽहम् अन्वेषयामि ।" सा प्रत्युक्तवती ।

"मां कथय, अहमपि मार्गणे प्रयत्नं करोमि ।"

"सा त्वेका कुञ्जिका वर्त्तते ।" सुखदा माम् उक्तवती ।

"अरे ! अत्र एतावत्याः समुद्विग्नतायाः का आवश्यकता ? यदि कुञ्जिका नैत्र मिलति तर्हि तेन किम् ? समक्षे विद्यमानस्य राजमार्गस्य दक्षिणत एव कश्चिदेकः कुञ्जिकानिर्माता तिष्ठति । स पञ्चमिनटेष्वेव कुञ्जिकां निर्मापयिष्यति ।"

" न हि भो !, कुञ्जिका तथाविधा न वर्त्तते यत तां कश्चिदपि निर्मातुं समर्थो भवेत्"—सुखदा प्रत्युवाच ।

अहं तस्या मनोभावं वेदितुं नाऽशकम्, अत्र च तया सह विवादमपि न कृतवती । सा बहुकालपर्यन्तं तस्याः कुञ्जिकाया एव मार्गणे इतस्ततो निरता बभूव । अन्ततः सा समीपस्थस्य पर्यङ्कस्याऽधस्तादेव तां कुंजिकां प्राप्तवती । तामधिगम्य च सा तां कुञ्जिकां तथा चुम्बितुमारब्धवती यथा सा तस्याः किमपि महदतिशयं प्रियं वस्तु वर्त्तते । अहं तदानीं तस्यास्तां प्रमत्त-भावनाम् उन्मादस्थितिं वा मुहुर्मुहुराश्चर्यचकिताभ्यां नेत्राभ्यां विलोकयन्ती संस्थिता ।

"अस्यां कुंजिकायां किं तथाविधं वैशिष्ट्यं विद्यते यत् त्वम् एनां प्राप्य प्रसन्नतया प्रमत्तेव भवसि ?" अहं पृष्टवती ।

"अहो ! त्वमेतत् कथमपि नाऽवगन्तुं पारयिष्यसि । इयं कुंजिका

संसारेऽस्मिन् अद्वितीया एव वर्त्तते । तस्मादेव च कुंजिकामिमां संसारे कश्चिदपि पुरुषो निर्मातुं न प्रभवति। यदि चेयं क्वचित् तिरोहिता भवेत् तदा त्वहम् आत्मानं क्षन्तुम् असमर्था भविष्यामि।" सुखदा ममैव निकटे समुपविशन्ती प्रोक्तवती ।

"परम् इह तु न किमपि वैशिष्ट्यं प्रतिभाति । इयमपि साधारण-कुंजिकेव मां प्रतिभासते।" अहम् उक्तवती ।

"न हि भो ! न हि, नैवं कथयस्व, इयं सामान्या कुंजिका न वर्त्तते। परम् एषा तु आवयोरर्थात् मम श्रीप्रेमपालस्य च स्नेहसदनस्य प्रेम्णः कोषस्य हृदयकपाटस्य च कुंजिका वर्त्तते। किम् एतस्याः कुंजिकायाः कथां भवती श्रोतुमिच्छति ?" सुखदा निजगाद ।

"अवश्यम्···अवश्यमेव। यतो हि कुंजिकायास्तथा प्रशंसां श्रावं श्रावम् मम समुद्विग्नता जिज्ञासा च प्रवर्धतेतमाम्।"अहम् प्रत्यवोचम्।

मम वचनमाकर्ण्य सुन्दरी सुखदा एवम् अब्रवीत्--"अरे ! अत्र कुञ्जिकाया रहस्य-कथायां किमपि वैशिष्ट्यं वृत्तं न वर्त्तते।" इत्युक्त्वा सा क्षणं विरम्य पुनश्च दीर्घं निःश्वस्य माम् अभिलक्ष्य शनैः शनैरेवं वक्तुं प्रारब्धवती—

"अस्माकमपि जन्मसम्बन्ध एकेनचित् मध्यमवर्गीयेण परिवारेण सह वर्त्तते। त्वं तु जानास्येव यत् तथाविधा मध्यवर्गीया जनाः प्रायशो बुद्धि-जीविनो भवन्ति येषां लक्ष्यम् इदमेव भवति यत् ते कथमपि शिक्षणम् अध्ययनं च समाप्य कामप्युच्चाम् उपाधिं समधिगम्य जीवने साफल्यम् उन्नतिं वा प्राप्नुवीरन्। एतेषां मध्यवर्गीयाणां समीपे धनस्य कश्चिद् विशिष्ट आश्रयो न भवति। ते स्वकीयं जीवनं सुशिक्षा-सुसंस्कृति-सुरुचि-सम्पन्नतानां माध्यमेन समुन्नयन्ति।"

"अस्माकं जनकोऽपि एकस्मिन् महाविद्यालये प्राध्यापक आसीत्। साम्प्रतं तु स सेवानिवृत्तः सन् गृहे तिष्ठति। मम ज्येष्ठा स्वसा विवाहिता वर्त्तते। लघुभ्राता च साम्प्रतमपि महाविद्यालयेऽध्ययनं करोति। अहन्तु बाल्यकालादेवाऽतिशयगौरवर्णा सुरूपा स्वाध्याय-प्रिया चाऽभवम्। साम्प्रत-मपि मया श्वशुरालयेऽपि तादृश एव स्नेहः समादरःसुखं चोपलभ्यते यथा किल मातृगेहे मया प्राप्यते स्म। बह्व्यो विवाहितास्तु स्वकीये श्वशुरालये बहुविधां प्रतिकूलतां भजन्ते, यदा किल एवमपि दृश्यते यत् बह्व्यो बालिका मातृगेहे दुःखेन पालिताः सत्यः श्वशुरालयम्प्राप्य सुखातिशयम् अनुभवन्ति। परन्तु मया समं तु तथाविधं न किमपि संवृत्तम्।"

"त्वं सत्यं कथयसि, यतोहि तव प्रसन्नतां प्रमोदाऽधिक्यं च विलोक्याऽहं भगवन्तं त्वत्कृते शुभकामनामेव केवलं याचे। परं त्वदीयकथायाम् अधुना-पर्यन्तं कुञ्जिकायाश्चर्चा न समागता ?" अहं मध्ये प्रोक्तवती।

"अहो ! धैर्यं धारयस्व, तदेव तु कथयामि।" इत्युक्त्वा क्षणं विरम्य सुखदा पुनरग्रे वक्तुं प्रारब्धवती—

"मम सौन्दर्यस्य स्वभावस्य शालीनतायाश्च चर्चा मम ज्ञातिसम्बन्धिषु मध्ये प्रायः प्रचलति स्म। फलतः समवयस्का बहवो युवकाः ये खलु मम ज्ञातीनां सम्बन्धिनां च परिवारस्य सदस्या आसन्, अथवा तेषां सखाय आसन्, ते सर्व एव मया समं विवाह-बन्धनस्याऽभिलाषं प्रकटयन्ति स्म। तेष्वेव चैकः शिवप्रसादोऽपि वर्त्तते स्म। शिवप्रसादस्य पितरः श्रीमन्तः सत्यदेवमहोदया अस्माकं जनकस्य घनिष्ठा सखाय आसन्। ते प्रायः मम गृहे गमनाऽऽगमनं कुर्वन्ति स्म। प्रारम्भिकेषु कालेषु तेऽपि मत्पितुः सदृशमेव प्रायशो मध्यवर्गीया एवाऽभूवन् परन्तु स्वकीये व्यापारकार्ये पर्याप्तमुन्नतिं लाभं चाऽधिगम्य ते स्वकीयामार्थिकीं स्थितिं तथा कृतवन्तो यत्तेषां गणना उच्चवर्गीयेषु अतिसम्पन्नता-प्राप्तेषु जनेषु प्रवर्त्तते स्म। तेषां विचारदृष्टिरपि मध्यमवर्गीयजनेभ्यो भिन्ना काचित् प्रदर्शनप्रियतापरा आभिजात्य-दृष्टि-संयुक्ता च सञ्जाता। तैः स्वविचार-दृष्टिः स्वकीयपुत्रेष्वपि प्रवेशिता। ते सर्वेऽपि तेषामेव पदचिन्हेषु प्रचलन्ति स्म।"

"भ्रातृत्रयाणां मध्ये शिवप्रसादः कनिष्ठतम आसीत्। सोऽपि स्वपितुः श्रीसत्यदेवमहोदयस्य सदृशमेव केवलं भौतिकं सुखसाधनं वित्तमेव च जीवनस्य चरममुद्देश्यम् इति मन्यमानः तथैव व्यवहारं प्रकुरुते स्म। केवलं रूप्यकम्··· रूप्यकम्···रूप्यकम् इत्येव तेषां सर्वेषां जीवनस्य परमं ध्येयम् इति। एवं-विधानां जनानां स्वभावेषु चिन्ताजनकमिदं वृत्तं भवति यत् तेषां जीवने नाना-प्रकारका दुष्प्रवृत्तयः समुत्पद्यन्त स्व। तथाविधा मनुष्या मूलतः स्वार्थिनः प्रदर्शनप्रिया अहङ्कारिणश्च जायन्ते। शिवप्रसादोऽपि स्वभावतः किञ्चित् तथैव समवर्त्तत। तद्विपरीतः श्रीप्रेमपालमहोदयः पूर्वत एव भद्रभावविभूषितः सात्त्विकः स्वाध्यायप्रियः शिष्टश्च दृश्यते स्म। यदि च साम्प्रतं स मम पतिरूपेण नाऽभ्यमविष्यत् तदाऽप्यहं तस्य प्रशंसामेवाऽकरिष्यम्।"

"त्वादृश्यः पत्न्यश्चाऽपि तु सुदुर्लभा एव भवन्ति।" अहम् उक्तवती।

"तवाऽपि वचनं सत्यमेव" सुखदा विहस्याऽग्रे निजगाद—"अस्तु, त्वं मां निपुणतया निरीक्ष्य सत्यं कथयस्व यदहं कीदृशी प्रतिभासे ?"।

"अत्र प्रश्नस्य कोऽवसरः ? शङ्कया वा किं स्थानम् ? त्वं लक्षेष्वपि एकाकिनी अद्वितीया च वर्त्तसे !"— अहम् उक्तवती ।

"एवम्, अस्तु·· तस्मादेव मम निकटस्थेषु परिवारीययुवकेषु सम्बन्धिषु च माम् अधिगन्तुम् एका लिप्सा प्रतियोगिता वा प्रवर्त्तमाना प्रतीयते स्म । तत्र श्रीशिवप्रसादः प्रेमपालश्चाऽपि प्रतियोगिरूपेण दृश्येते स्म । यद्यपि श्रीप्रेमपालः प्रकटरूपेण मत्समक्षं स्वकीयं मनोभावं कदापि न प्रकटितवान् । एतत्सन्दर्भे स कश्चिदेकान्तप्रियोऽन्तर्मुखश्च प्रतीयते स्म । सम्भवतः तेन मनसि इदमपि विचारितं स्याद् यद् यस्यां प्रतियोगितायां शिवप्रसाद-सदृशाः सम्पन्ना धनाढ्या युवकाश्च सम्मिलिता वर्त्तन्ते तत्र तस्य का गतिः ? कश्चाऽवसरः ? । परन्तु स सम्भवत एतन्न जानाति स्म यदहं तं कथङ्कारम् आत्मीयरूपेण प्रियतमरूपेण वा स्वकीयाऽन्तस्तले निगूह्य संस्थापयामि समभिलषामि च । वस्तुतः श्रीप्रेमपालो नम्रस्वभावः सुशीलः संकोचशीलश्च समवर्त्तत ।" क्षणं विरम्य सुखदा सहसा मां पृष्टवती "अस्तु, त्वं माम् इदं कथयस्व यत् त्वया कदाचित् केनचित् समं प्रेम कृतम् ?" ।

"त्वं मम वृत्तान्तं त्यज स्वकीयं वृत्तान्तम् अग्रे कथयस्व"- अहम् प्रत्युक्तवती ।

'अयि ! सखि ! अहं तु जानासि यत् जीवनस्य वास्तविक आनन्दः प्रेमकर्मण्येव वर्त्तते । अन्यत् तु सर्वं सामान्यं दैनन्दिनं वृत्तमेव च भवति । तस्मिन् समये तु मम मनसि केवलम् इयमेव पङ्क्तिः सततमेव नृत्यति स्म—

"तव न जाने हृदयं मम पुनर्मदनो दिवाऽपि रात्रावपि ।
निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥"
—इति सुखदा मन्दं विहस्याऽब्रवीत् ।

"त्वं तु प्रमत्तबालिकेव जल्पसि । न जाने मध्ये मध्ये कुत्र त्वम् इतस्ततः परिभ्रमन्तीव प्रतीयसे । अरे ! अग्रे कथयस्व स्वकीयं वृत्तान्तम् ।" अहं विहस्य प्रोक्तवती ।

"शृणु भो ! कस्याश्चित्कथायाः श्रवणस्य वास्तविक आनन्द एतस्मिन्नेव वर्त्तते यत् सा कथा पूर्णतया मनोयोगेन साङ्गोपाङ्गं निवेदनीया भवेत् तथैव च सा धैर्यपूर्वकं सोत्सुकं च श्रवणीया स्यात् ।"—इत्युक्त्वा सुखदा पुनरेवम् अग्रे वक्तुं प्रारब्धवती —

"अस्तु, अहं कथयामि स्म यत् माम् अधिगन्तुं काचित् प्रतियोगितेव

प्रवर्त्तमाना दृश्यते स्म । प्रत्येक एक मत्पुरतस्तथा सज्जीभूय समागच्छति स्म यत् तस्य चेष्टितैराचरणैरेव च तस्याऽपि प्रतियोगित्वं स्फुटमेव प्रकटितमभवत् । परम् अहं तु स्वहृदये केवलं श्रीप्रेमपालमहोदयमेव पतिरूपेण कामये स्म । वस्तुतोऽस्माद्विधासु मध्यमवर्गीय-भारतीय-बालिकासु इयमेका महती न्यूनता भवति यद् वयं निःसङ्कोचभावेन स्वकीयं विवाहसम्बन्धिनं मनोरथमपि पित्रोः समक्षम् अभिव्यक्तीकर्त्तुं न पारयामहे । काभिश्चिद् अभिव्यक्तिभिरेव परिवारस्थजानानां नासिकाश्छिद्यन्ते, वयं चाऽपि 'निर्लज्जा —उन्मुक्ता प्रभृतिभिर्विषणैर्विभूषिता भवामः । नाऽहं जानामि यदत्र निर्लज्जतायाः का वार्त्ता ? यदा खलु वयं स्वकीयं वस्त्रम् आभूषणम् उपानहादिकं च स्वयमेव यथेच्छम् आपणे गत्वा आनयामस्तदा स्वकीयं पतिमपि स्वयमेव मार्गयित्वा वृत्वा च यदि प्राप्तुमिच्छामस्तदा कोऽत्राऽपराध ? ··· अस्तु, श्रीप्रेमपालमहं मनसाऽभिलषामि स्म परन्तु कदापि तत्समक्षं तन्निवेदयितुमहं न प्रभवामि स्म । अहम् इदमपि च ज्ञातवती यत् सोऽपि माम् अतितरामभिलषति स्म परन्तु मादृश एव सोऽपि स्वकीयं मनोभावं कदापि मत्पुरतो नैव निवेदितवान् ।'

"कथम् ? स तु बालिका न बभूव, स तु स्वकीयमभिलाषं निवेदनं च त्वत्समक्षं प्रस्तोतुं समर्थ आसीत् । स त्वां कथं किमपि न सङ्केतितवान् ?" —अहं मध्ये पृष्टवती ।

"एवम्···, स तु वक्तुं, समर्थ आसीत् परन्तु स इदमनुमानं निरूप्य किमपि न प्रोक्तवान् यत् क्वचिदहं तस्य प्रस्तावम् अस्वीकृतं न कुर्याम् । यतोहि मयि साभिलाषाः युवानस्तदपेक्षया पर्याप्तं सम्पन्नाः सामर्थ्ययुक्ताश्चाऽभवन् । श्रीशिवप्रसादस्य तु वृत्तान्तमेव पृथगासीत् । तस्य जनकास्तदर्थमेकं पृथक् स्वतन्त्रं व्यापारकार्यम् आरभितवन्तः । तस्य व्यापारः प्रत्यहं पर्याप्तं प्रवर्धते स्म । तस्य सुन्दरं कार्यालयभवनम् बैङ्केषु प्रभूतं वित्तम्··· त्रयः सेवकाः ··पृथक् कारयानम्···न जाने किं किम्···? । एतद्विपरीतः श्रीप्रेमपालस्तु यद्यपि स्वकीयमध्ययनं समाप्य सद्य एव विश्वविद्यालयस्योपाधीर्गृहीतवान् परन्तु एतेनैव तस्य भविष्यत्कालोऽपि सुन्दरः सुविधासम्पन्नश्च भवेद् इति तु न शक्यते निश्चयेन वक्तुम् । तस्य तातोऽपि साधारणो मध्यमवर्गीयः पुरुष आसीत् । कस्मिंश्चित् कार्यालये नियुक्तः ··अल्पम् आयधनम्···अन्यथारूपेणोपार्जितधनम्प्रति विमुखः कर्त्तव्यनिष्ठः सदाचारी पुरुषः ।"

सुखदा स्वकीयां कथाम् अग्रे श्रावयन्ती पुनरेवम् अब्रवीत्—"यथा

किल मम सामान्यो मध्यमवर्गीयः परिवारस्तत्राऽहम् एतेनैव सन्तुष्टा बभूव यन्मम विवाहस्य सन्दर्भे क्वचिदन्यत्र भ्रमणस्य यत्र तत्र वा वराऽन्वेषणस्य च विशिष्टाऽऽवश्यकता न भविष्यति । सम्बन्धिजनेष्वेव तथाविधा बहवो युवानो ममाऽभिलाषिणः सन्तो दृश्यन्ते स्म । यद्यपि मम पितृमहोदयो मम जनन्यास्तथाविधां विवाहविषयिकीं चिन्तां निरूप्य परिहासमपि करोति स्म परन्तु मम जनन्या एष विचार आसीद् यत् कन्याया विवाहस्य सन्दर्भे निश्चितमानसेन न भवितव्यम् । प्रयासस्तु निरन्तरमेव करणीयः । न जाने कस्यचित् ललाटे किं लिखितं भवेत् ?" ।

"अस्तु, पुनरेकस्मिन् दिवसे मम जननी मम विंशतितमं जन्मोत्सवम् अत्युत्साहेन सम्पादयितुं व्यवस्थां कृतवतीं । यद्यपि मम जन्मदिवसोत्सवस्तु प्रायः प्रत्येकस्मिन्नेव वर्षे यथाकथञ्चित् सामान्यभावेन सम्पाद्यते स्म परन्तु तस्मिन् वर्षे तद् विशिष्टं समायोजनं निरीक्ष्य मम जनन्याः जनकस्य च मध्ये सम्भूतो यो वार्त्तालापो मम श्रुतिपथमागतः स प्रायः कश्चिद् निम्नप्रकार इव समवर्त्तत—

"मम मस्तिष्के नेदं समायाति यत् कथं त्वमेतावतीं व्ययसाध्यां व्यवस्थां जन्मोत्सवसन्दर्भे सम्पादयसि ?"—जनकः पृष्टवान् ।

"त्वं पिता भूत्वाऽपि यदा चक्षूंषि निमील्य निश्चिन्तस्तिष्ठसि तदा किं शक्यते कर्त्तुम् ? पश्य सुखदाया आयुर्विवाहयोग्यं सञ्जातम् । अहमिच्छामि यत् परिवारस्थाः सर्वे सम्बन्धिनो ज्ञातयो बान्धवाश्च तां निरीक्षन्ताम्···अवगच्छन्तु···परिग्रहीतुकामाश्च भवन्तु"—जननी प्रत्युवाच ।

"अहो ! तदिदम् अधुना मया ज्ञातम् !···मन्ये स्वयंवरसदृशी व्यवस्था वर्त्तते । अथवा जन्मोत्सवव्याजेन कन्याप्रदर्शनस्य वरदर्शनस्य वाऽपि समुत्सवो वर्त्तते ।"—मम जनको दीर्घं निःश्वस्य निजगाद ।

"अधुना त्वं तदेव मन्यस्व । अहं निश्चितं जानामि यत् एतस्य जन्मदिवसभोजोत्सवस्याऽनन्तरं मम सुखदायै विवाहस्य प्रस्तावा आगन्तुं प्रारप्स्यन्ते ।"—जनन्याः स्वर आसीत् ।

"त्वं तु विचित्रा बुद्धिशून्या च वर्त्तसे । अरे ! मम सुखदायै विवाहप्रस्तावानां कुतो न्यूनता ? तस्मिन्नेव दिने तु भ्रातृतुल्याः श्री सत्यदेवमहोदयाः स्वकनिष्ठपुत्रस्य शिवप्रसादस्य कृते सुखदाया हस्तमभिलषन्ति स्म मां च संकेतयन्ति स्म ।"—जनकस्य स्वर आसीत् ।

"अहो ! एवं किल...?" मम जननी पुलकितमानसा सहर्षमग्रे पुनराह—"त्वया पूर्वं कथं न प्रोक्तम् ? अधुना पुनः किं भवितुं शक्यते ? सर्व एव तु भोजोत्सवार्थम् आमन्त्रिताः सञ्जाताः ।"

"अस्तु, न किमपि विशिष्टं संवृत्तम् । सर्वे तत्रोत्सवे समागच्छन्तुतराम् ।"—जनको विस्रब्धमानसः प्रत्युवाच ।

सुखदा स्वकथामग्रे विस्तारयन्ती ब्रवीति—"तत्सर्वं वार्तालापं समाकर्ण्याऽहं तु चिन्तातुरा सञ्जाता । यतो हि पितृमहोदयेन तु सम्भवतः श्रीशिवप्रसाद एव मन्ये वररूपेण स्वीकृतः स्यात् । परन्तु श्रीप्रेमपालस्तस्य परिवारस्य च जनाः कथं न हि मदर्थं विचारयन्ति स्म...? ते सर्वे कथं तूष्णीं समासते...? यदि ते मां स्वकीयवधूरूपेण स्वीकर्तुं किमपि चेष्टितम् इङ्गितं च समाचरिष्यन् तर्हि अहमपि स्वजनन्याः समक्षं स्वमन्तव्यं प्रकटितमकरिष्यम्... परन्तु तैस्तु कश्चित् संकेत एव न प्रकृतः मयाऽपि च लज्जावशात् तत्र किमपि न प्रोक्तम् ।"

"अस्तु, मम जन्मदिनसमारोहदिवसोऽपि समागत एव । तस्मिन् दिने मम गृहे पर्याप्तं जनसम्मर्दः समुपस्थितिश्च सुतरां समजायत । बहवः सम्बन्धिनो ज्ञातयो बन्धु-बान्धवाश्च तत्र विराजमाना दृश्यन्ते स्म । विविधैः सुन्दरैर्युवकैः सुन्दरीभिः कन्यकाभिः सुकुमारीभिश्चाऽस्मदीयं गृहं परिव्याप्तमभवत् । सत्यप्रकाशोऽपि तन्मध्य एव सुसज्जितः सन् विराजते स्म । तत्र तस्येङ्गितैश्चेष्टितैर्निमिषितैश्च स्पष्टमेव प्रतीयते स्म यत् स तु माम् अधिगन्तुमेव यथा बद्धपरिकरो भूत्वा समागतो भवेत् । तद्विपरीतः श्रीप्रेमपालस्तु स्वकीयस्वभावाऽनुकूलस्तत्रैव किञ्चिदेकान्ते शान्तो विनम्रतायुक्तश्च तिष्ठति स्म ।"

"मम समीपे समागतानाम् उपहाराणां विशालः सञ्चयः प्रादुर्भूतः । प्रायः प्रत्येक एव जनः स्वसामर्थ्याऽनुसारं सुन्दरमुपहारं प्रस्तुतवान् । अहं तु तस्मिन् समारोहे सर्वेषां मनुष्याणां चक्षुषां केन्द्रबिन्दुरेव सञ्जाता । सर्वे मम परित एव उपविष्टा आसन् । पुनस्तन्मध्य एव सहसा समुत्थाय तत्रस्थान् सर्वान् जनांश्च स्वाऽभिमुखमिव कुर्वाणः समुद्धतस्वरेण शिवप्रसाद एवं प्रोक्तवान्—"अयि ! आगन्तुकमहानुभावाः ! भद्रपुरुषाः ! सम्मानिता महिलाश्च !! यद्यपि मम पितृमहोदयो जननीमहोदया च सुखदायै स्वकीयान् उपहारान् प्रदत्तवन्तौ पुनरप्यहं स्वकीयपक्षतः एकमन्यम् उपहारम् एतस्याः सेवायां प्रस्तोतुमिच्छामि ।"

"मन्ये तस्य तद्घोषणामाकर्ण्य समागतानाम् अन्येषामतिथीनां मानसे कश्चित् कुतूहलः समुद्भूतो भवेत् अथवा तेषां हृदये प्रसन्नता प्रादुर्भूता भवेत् परन्तु तस्य तथाविधा घोषणा तु मम मनसि काचित् सुरुचिसम्पन्ना शिष्टा च न प्रतीयते स्म। वस्तुतस्तस्यास्तथाविधाया घोषणायाः प्रकारस्तस्य क्षुद्रमानसिकतायाः प्रदर्शनप्रियतायाः स्तरहीनतायाश्च परिचायक इव समवर्त्तत। ततोऽप्यधिकम् आश्चर्यं त्विदमासीद् यन्मम पितरावपि तत्सर्वमाकर्ण्य परमप्रसन्नतायुक्तौ दृश्येते स्म, यदा किल श्रीप्रेमपालस्तु तत्सर्वं निशम्य केवलं पार्श्वपरिवर्त्तनं कुर्वाणः शान्तः समतिष्ठत्।"

"अस्तु, शिवप्रसादस्तु, तथाविधघोषणाऽनन्तरं तत्र किञ्चिद् गर्वोन्नतशिरसा सर्वतः स्वदृष्टिक्षेपं कृतवान्। पुनः स्वकोटवस्त्रस्याऽन्र्वसनाद् (पाकेटात्) एकां कुञ्जिकां निःसार्य मत्पुरतः प्रस्तुतवान्। तस्मिन् समये त्वहमपि नेदं विज्ञातुं समर्थोऽभूवं यत् स तां कुञ्जकां मह्यं किमर्थम् प्रयच्छति।"

"इदं नवीनस्य मारुतिकारयानस्य कुञ्जिका वर्त्तते। अहमिदं कारयनाम् उपहारस्वरूपम् अद्य सुखदायै समर्पयामि।" इति तत्र सर्वान् समुपस्थितजनान् चकितान् इव कुर्वाणः शिवप्रसादोऽग्रे निजगाद।

"किञ्चित्कालपर्यन्तं तु तत्र स्तब्धतेव सञ्जाता। पुनः सर्वे समुपस्थिता जनास्तालीवादनं कुर्वाणाः प्रसन्नतां प्राकटयन्। स्पष्टमेवासीद यत् तथाविधं बहुमूल्यम् उपहारं कः कस्मै प्रदातुं प्रभवति ? तत्रोत्सवे सर्वत एव शिवप्रसादद्वारा प्रदत्तस्य तस्योपहारस्यैव चर्चा प्रशंसा च प्रवर्त्तते स्म। तद्द्वारा प्रदत्तेनोपहारेण च स्पष्टत एव इदमपि ध्वन्यते स्म यत् स मया समम् एव जीवनं यापयितुं कामयते स्म। मम दृष्टिरनायासं स्वत एव तत्रैव समीपस्थं श्रीप्रेमपालाऽभिमुखं गतवती। अहं जानामि स्म यत् तस्य समीपे तु किमपि न वर्त्तते। पुनरपि तत्रोत्सवसभायाम् एका विचित्रा घटना सम्भूता। सर्वैर्दृष्टं यत् श्रीप्रेमपालोऽपि स्वस्थानाद् उत्थाय मदभिमुखं समागतः। सोऽपि स्वाऽन्तर्वसने (पाकेटे) हस्तं निवेश्य ततश्च कामप्येकां कुञ्जिकां निःसार्य तत्रैव मञ्चे मत्पुरतः समुपस्थापयत्।"

"इयं कुञ्जिका मत्पक्षतः प्रस्तूयते" इति स शान्तमानसो गभीरेण स्वरेण प्रोक्तवान्। तस्य तच्चेष्टया किंचित्कालपर्यन्तं तु तत्र नीरवता व्याप्ता परन्तु पुनस्तत्र सर्वे तत्क्षणमेव स्मेरमुखाः सञ्जाताः। सर्वेषां समुपस्थितानां नयनेषु श्रीप्रेमपालं प्रति कश्चिदुपहासभाव इव तिष्ठति स्म।

"किम् भो ! किमियं कुञ्जिका कस्यचित् मर्सिडीजकारयानस्य वर्त्तते ?" श्रीशिवप्रसादस्तत्र किञ्चिद् विहस्य तं पृष्टवान् ।

"इयं कुञ्जिका सुखदायै वर्त्तते" इति श्रीप्रेमपालः शान्तभावेन शनैः प्रोक्तवान् ।

"अन्ततः एतदपि त्वस्माभि र्ज्ञातव्यं यत् कस्य वस्तुन इयं कुंजिका वर्त्तते ?" इति तत्रस्थः कश्चिद् युवकः किमप्युपहसन्निव पृष्टवान् ।

"एषा कुञ्जिका मम हृदयकपाटस्य वर्त्तते ।" इति श्रीप्रेमपालः प्रत्युवाच ।

तस्य तद्वचनं समाकर्ण्य तत्र पुनरेव गाढनिःस्तब्धता संजाता । सर्वे परस्परम् अन्योन्यञ्च पश्यन्तो विचित्रभाव-सम्पन्ना भवन्ति स्म । अहमपि लज्जया किञ्चिदारक्तनयना सती स्वकीये हृदये नितरां प्रसन्नतां वहामि स्म । श्रीप्रेमपालो यस्य साहसस्य तत्र प्रदर्शनं कृतवान् तत्साहसं तु कश्चिद् दृढमानसः पुरुष एव कर्त्तुं शक्नोति स्म । यद्यपि तस्मिन् काले सर्वेषां दृष्टयो मदभिमुखमेव बभूवुः परन्तु मयाऽपि तदानीं तस्यैव साहसस्य दृढमानसिकतायाश्च परिचयः प्रदातव्य आसीत् यस्य प्रदर्शनं श्रीप्रेमपालेन कृतमासीत्— इति विचार्य समस्तं सङ्कोचं लज्जाम् अन्यमनस्कताम् असमञ्जसतां च परित्यज्य श्रीप्रेमपालद्वारा प्रदत्तां कुञ्जिकामहम् उत्थापितवती । तथा कृत्वा मन्ये मया श्रीप्रेमपालस्य पक्षे स्वकीयो निर्णयः श्रावितः ।"

"एवं मया समं श्रीप्रेमपालस्य विवाहः समपद्यत । साम्प्रतमावाम् अतिशयप्रियता-सम्पन्नौ स्नेहान्वितौ सन्तौ स्वजीवनं सुखेन यापयावहे । इयं कुंजिका च सैव वर्त्तते···तस्य हृदयकपाटस्य । मन्येऽधुना त्वया ज्ञातं भवेद् यत् कुंजिकेयं मत्कृते कियती मूल्यवती वर्त्तते !"

"एवम्···अहं ज्ञातवती तत्सर्वम् । परन्तु त्वत्कृते मम अत्रैकः सत्परामर्शो वर्त्तते । त्वम् एनां कुंजिकां साम्प्रतं क्षिप्त्वा दूरीकुरुष्व ।" अहम् अवोचम् ।

"तत् कथम् ?" सुखदा पर्यपृच्छत् ।

"यदा श्रीप्रेमपालमहोदयस्य हृदयकपाटस्त्वत्कृते अनावृत एव सञ्जातस्तदा पुनरस्याः कुंजिकायाः का आवश्यकता ? पुनः कदाचिद् अस्यां

तिरोहितायां सत्यां त्वं व्यर्थमेव समुद्दिवग्नतां चिन्तां च धारयिष्यसि।" अहं स्पष्टीकरणं प्रस्तुतवती।

सुखदा साम्प्रतं तु मम प्रतिवेशिरूपेण न निवसति। उभावपि पतिपत्न्यौ क्वचिदन्यत्र गतवन्तौ। पुनरपि तयोः सुखसिक्तं स्नेहान्वितं च च जीवनं स्मारं स्मारम् अतीव हृष्यामि। अहमिदमपि च विचारयामि यदस्माकं समाजे यदि प्रत्येकस्य विवाहितस्य पुरुषस्य गृहे तथाविधा कुञ्जिका भवेत् तदा कियती समीचीनता समञ्जसता च स्यात्!!॥

• • •

# दिवास्वप्नः

ट्रेनयानं द्रुतगतिपूर्वकं स्वगन्तव्यम् अभिवर्तते स्म। अहञ्च विचार-निमग्ना स्वकीयां लघुमञ्जूषां शिरःसमीपे निधाय चक्षूंषि निमील्य आत्मनोऽतीतम् अनुध्यायन्ती ट्रेनयानस्य बेञ्चे चरणौ प्रसारितवती। तमेव अतीतं यं मोचयितुकामा अहं नगरम्परित्यज्य पुनः स्वकीयां ग्रामभूमिं प्रस्थितवती। मम स एव ग्रामो यस्य स्वच्छन्दे विशाले च वातावरणे अहं विगतमासद्वये नगरे सम्प्राप्तं सन्त्रासं कुण्ठां सङ्कीर्णतां च निरपास्य पुनर्जीवितुमिच्छामि।

× × × ×

अहं नगरम् अवलोकितुम् अत्यन्तम् अभिलषामि स्म। यत्कालादेव मम पुत्रो मोहनो नगरे नियोजनं लब्धवान् तत्कालादेव मम नगरदर्शनस्य स्वप्नो मनसि सञ्चरितोऽभवत्। मोहनो यदाऽपि समये प्राप्ते ग्रामे समागच्छति स्म तदा स नगरविषयिकीं वार्तां नगरे विद्यमानानां सुविधानां नगरस्थानां महाभवनानां राजमार्गाणां चतुष्पथानां च वर्णनं कुर्वाणो माम् आश्चर्य-

चकितां करोति स्म। यदाऽपि सा ग्रामे समागच्छति स्म तदा नगरे समुपलभ्य-मानानां नाना-वस्तूनां माध्यमेन स्वकीयं ग्रामगृहं विभूषयन् मां नगरे समागन्तुं प्रार्थयते स्म, तदा तु मम नगरदर्शनस्य मनोवृत्तिरपि अत्यन्तं वर्धते स्म। मोहने च नगरे प्रतिनिवृत्ते अहं तद्द्वारा समानीतानि सकलानि सज्जाकराणि वस्तूनि आलमारीस्थाने वस्त्रावरणैः सुरक्षितं विधाय स्थापयामि स्म यतोहि ग्रामस्थ-धूल्याधिक्येन सर्वाणि तानि वस्तूनि मलिनतां प्राप्नुवन्ति स्म।

मनसि क्वचिदयमपि विचारः समेधते स्म यत् यदा मोहनस्य विवाहाऽनन्तरं तस्य वधूः समागमिष्यति तदा सा एतैरेव वस्तुभिः स्वकीयं नगर-स्थितमावासं विभूषयिष्यति। अहम् इमानि सकलानि वस्तूनि तस्य भार्यायै समर्प्य कथयिष्यामि यत् मोहनेनैव सर्वाणि सज्जाकराणीमानि वस्तूनि साभिलाषं क्रीतानीति तदाकर्ण्य तु सा ध्रुवमेव प्रसन्नताऽधिक्येन माम् आश्लेक्ष्यति।

मोहनस्तु कतिवारमेवाऽत्र ग्रामे समागत्य माम् उक्तवान्—मातः ! मया सार्धं त्वमपि नगरे चल, तव मनः कथमत्र एकाकि रमते ?"।

"अवश्यम् आगमिष्यामि तव नगरस्थे गृहे, यदा साऽपि (मम वधूः) आगमिष्यति। साम्प्रतं तु तत्र चाऽहमपि एकाकिनी एव वत्स्यामि। त्वं तु दिने कार्यालये भविष्यसि। तत्र तु मम कश्चिदपि परिचितोऽपि न वर्तते येन समं किञ्चिद् वार्त्तालापादिकं विधायाऽहं समयं यापयेयम्। अत्र ग्रामेपि यद्यप्येकाकिनी एव गृहे भवामि पुनरपि तदेकाकित्वं न मह्यं पीडयति। सर्वमायुस्तु अत्रैव व्यतीतम्। तथा प्रतिवेशिन्योऽपि यदा कदाचिदागत्य चिरं वार्तालापे मग्ना भवन्ति।' इत्यादिकानि वचनानि कथयन्त्यहं स्वपुत्रं मोहनं तोषयामि स्म।

मोहनो मम तादृशमुत्तरमाकर्ण्य किञ्चित् स्मित्वा तूष्णीं भवति स्म। ग्रामेण समं मोहनस्याऽपि ममता काचिद् आसीदेव। ग्रामवासिनोऽपि इदमनु-भवन्ति स्म यत् मोहनो नगरे गत्वाऽपि ग्राम्यपरिवेषेण पृथक् न वर्तते, न चाऽपि ग्रामाद् दूरंगतः। यदा कदाचिदपि स नगरात् ग्रामे समागच्छति तदा सायं समये परिभ्रमन् कदाचित् ग्रामस्य कृषिक्षेत्राणि अभिगच्छति स्म, कदाचित् इक्षुदण्डं चूषयन् प्रतिनिवर्त्तते स्म, कदाचित् तस्य हस्तयोः अभिनवं शाकं भवति स्म, कदाचिच्च भुट्टा-हरित-कलायः (हरा मटर) अभिनव-कर्कटी जम्बूफलानि वा भवन्ति स्म। तत्सर्वमवलोक्याऽहं हर्षप्रकर्षेण कथयामि स्म..."अरे मोहन ! तव बाल्यम् अधुनाऽपि न समाप्तम्।"

इक्षुरसो बाजरा-रोटिका च तस्मै बहु रोचते स्म । तक्रं नवनीतं विना च स रोटिकाया ग्रासमपि न गृह्णाति स्म । अहं तत्सर्वं विलोक्य तम् अकथयम् – 'मोहन ! एतत्सर्वं विना त्वं कथं भोजनं कुरुषे ?" स उत्तरयति स्म — 'त्वं तु पश्यस्येव मातः ! कथमहं नगरे निवसन् सुदुर्बलो भवामि । एतदर्थमेव त्वहं नगरात् ग्रामं प्रत्यागच्छामि । तव हस्तनिर्मितं भोजनम्प्राप्याऽत्र मह्यं पर्याप्तं तृप्तिर्भवति । नगरस्थितानां भोजनालयानां भोजनमपि किं भोजनं कथयितुं शक्यते ?" ।

× × × ×

मोहनः सत्यमेव कथयति । मयाऽपि श्रुतं यत् नगरेषु भोजनालयेषु प्रायः अभिनवशाकान्तर्गतमेव पर्युषितम् (बासी) अवशिष्टं शाकमपि मिश्रयित्वा प्रस्तुवन्ति । अहं यावदपि मोहनाय कृते विचारयामि स्म ततोऽप्यधिकं तत्कृते स्नेहराशिः प्रवर्धते स्म । मोहनं चिन्तयितुं तस्य नाना-गृहस्थ-समस्याः साधयितुं च कश्चिदपि तु भवेत् । अत एवाऽहं तस्य विवाहं तदिच्छानुसारं मनोनुकूलया कन्यया सममेव सम्पादितवती ।

सा कन्या नगरनिवासिनी एवाऽभवत् । यद्यपि ग्रामेभ्योऽपि बहवो विवाहसम्बन्धाः समागताः किन्तु मयाऽपि विचारितं यत् केवलं प्राथमिक-कक्षापर्यन्तं कृताऽध्ययना ग्रामस्थाः कन्यकाः मम मोहनस्य कृते उपयुक्ता नैव भविष्यन्ति ।

विवाहाऽनन्तरं मोहनस्योत्तरदायित्वं वृद्धिमगमत् । ग्रामे मोहनस्य गमनाऽऽगमनं शनैः शनैरल्पमेव प्रावर्त्तत । तस्य भार्याऽपि नगरे एव क्वचित् सेवावृत्तिं करोति स्म । तस्यै ग्राम्यं वातावरणं ग्रामश्च कथमपि न रोचते स्म । यद्यपि द्वि-त्रि-वारं सा मोहनेन सममेव ग्रामे समागता किन्तु तस्या गमनाऽऽगमनं ग्रामीणमहिलानां कृते प्रायश्चर्चाविषय एव सञ्जातः ।

भवानेव विचारयतु यत् नगरे समुत्पन्ना तत्रैव च कृताध्ययना कन्या या सम्प्रति तत्रैव सेवावृत्तिमपि सम्पादयति कथं खलु ग्रामे लम्बायमानम् अवगुण्ठनं विधाय निःसरेत् ? यदा च स तत्र ग्रामे कदाचित् मोहनेन समम् आङ्लभाषायां वार्तां करोति स्म तदा ग्राम्या महिलास्ताम् आश्चर्येण पश्यन्ति स्म । क्व नगरस्थं सुन्दर सीमन्टगृहम् क्व च ग्रामस्थं जीर्णं पैतृकं मृत्तिकागृहम् ? उभयत्र न कथमपि साम्यम् । अथ च ग्राम्यं जीवनं स्वभावत एव काठिन्यपूर्णम् । कदाचित् तया ग्रामस्तु नैव दृष्ट आसीत् । घटत्रयं

शिरसि निधाय कूपात् जलमानयन्तीः ग्राम्यबालाः विलोक्य तस्या आश्चर्याऽनुभूतिः स्वाभाविकी एवाऽभवत् । किन्तु यदा ग्रामस्य धूलिभिस्तस्याः कौशेय-शाटिका धूसरिता भवति स्म तदा तस्या उद्विग्नता विचित्रैव प्रवर्त्तते स्म । धूलिस्तु तत्कृते उद्विग्नताजनिका (एलर्जीकारिका) अजायत ।

"मोहन ! एतेषु मूर्खेषु ग्राम्येषु मध्ये कथं तव समयो व्यत्येति ? मम त्वत्र श्वासोऽपि निरुद्धो भवति ।" वध्वा अयं प्रलापो मम कर्णगोचरीभूतः । मनसि किञ्चिद् भग्नमिवाऽभवत् पुनरप्यहं संयतमना एवाऽभवम् । अहं वध्वा मानसमपि विचारयामि स्म । अग्रिमे दिवसे त्वहमेव तयोरुद्विग्नतामालक्ष्य तौ च नगरं प्रति गमनार्थं प्रेरितवती ।

× × × ×

समयः शनैः शनै व्यत्येति स्म । नगरदर्शनस्य ममाऽभिलाषस्तीव्रतर एव प्रावर्त्तत । साम्प्रतं तु मोहन एकस्य शिशोर्जनकोऽपि समवर्त्तत । मयाऽसौ शिशुरपि न दृष्टोऽभूत् । तस्य मुखाकृतिर्मम मानसपटले वारं वारं कल्पनायामेवाऽभिवर्तते स्म । अहमात्मानं निरुद्धं कर्त्तुं न प्राभवम् ।

अग्रिमे दिवसे त्वहमत्यन्तं स्नेहेन नवप्रसूतायै वध्वै हरिद्रा-शुण्ठी-शुष्कद्राक्षाफलादिमिश्रितं घृतमोदकं निर्माय मोहनस्य कृते च एकस्मिन् डिब्बापात्रे अभिनवम् इक्षुरसं 'ज्वार' इत्याख्यस्याऽन्नस्य रोटिकां, या खलु मोहनायाऽत्यन्तं रुचिकराऽभून, निर्माय नगराऽभिमुखं प्रतस्थे । मया मनसि विचारितं यत् एतानि सर्वाणि वस्तूनि समवलोक्य मोहनस्तस्य वधूश्च निश्चितमेवाऽत्यन्तं प्रसन्नतामनुभविष्यतः ।

पौत्रं शिशुं स्वयमेव स्नापयिष्यामि, तस्य प्रत्यङ्गे तैलमपि मर्दयिष्यामि, तेन सह वदिष्यामि, हसिष्यामि, तस्य दशनविहीनं मुख निरीक्ष्य किमपि कथयिष्यामि इत्यादि कियन्त्योऽपि भावनाः मम मानसं मोदयन्ते स्म । मया सह मम भ्रातृव्यो गोपालोऽपि आसीत् यो मां नगरे मोहनस्य गृहं प्रापयित्वा तस्मिन्नेव दिने पुनः ग्रामं प्रतिनिवृत्तोऽभवत् ।

अहं पुलकिता भूत्वा पर्यंके शयानं शिशुं क्रोडे समुत्थापयितुं यदैव तस्य स्पर्शम् अकार्षं तदैव वधूः मां निरोद्धुकामा एवमब्रवीत् "मां जी ! मुन्ना अधुनैव सुप्तो वर्तते । भवती इह समागत्य मन्ये यात्राकारणात् परिश्रान्ता भवेत् । पूर्वं मुखं हस्तं च प्रक्षाल्य किंचिद् विश्रम्य स्वस्था भवतु ।"

वधूवचनमाकर्ण्य मम समग्र उत्साहो विराममप्राप्तवान् । परन्तु मया स्वमनोभावः कथमपि नैव प्रकटितः । किञ्चिद् विश्रामाऽनन्तरं वधूः मत्पुरतः चायपात्रेण समं बिस्कुटमपि प्रस्तुतवती । "अयि ! वधू !! किमिदमपि भोक्तव्यम् ? मम झोलकम् उत्थापय । पश्य त्वत्कृते मया किम् आनीतम् ।" इत्याद्युक्त्वा तदनन्तरं मया स्वझोलकात् मोदकानां डिब्बापात्रम् उद्घाट्य वध्वाः समक्षं प्रस्तुतम् ।

"मां जी । भवती व्यर्थमेव एतेषां निर्माणे कष्टं कृतवती । साम्प्रतं वयं स्निग्धघृतादिपदार्थैर्निर्मितानां वस्तूनां सेवनं कदापि नैव कुर्महे । एवंविधानि वस्तूनि गरिष्ठानि मेदोवर्धकानि च भवन्ति ।" इत्याद्युक्त्वा मोहनस्य वधूस्तत्र निरपेक्षचित्ता सञ्जाता ।

वध्वा इदमालपनं निशम्य मम सर्व आगमनोत्साहः प्रशमित एवाऽभूत् । स्मरामि यत् मोहनस्य गृहं प्राप्य प्रस्थानसमये मम भ्रातृव्येन गोपालेनोक्तम् आसीत् पितृव्ये ! अहं चलेयम् ? इति तदा "अस्तु पुत्र । प्रतिनिवर्तस्व" इति कथयन्ती अहं तम् इच्छन्त्यपि निरोद्धुं नाऽपारयम् । "ग्राम्यो मूर्खश्च" इति वधूप्रोक्तं शब्दद्वयं सदैव मम स्मृतिपथे नृत्यति स्म । अस्तु, गोपालस्तु प्रस्थित एव । सायंकाले यदा मोहनः कार्यालयात् प्रतिनिवृत्तस्तदा मया तत्समक्षम् इक्षुरसो ज्वाररोटिका च प्रस्तुता । परन्तु मोहनेनाऽपि तत्र कश्चिद् उत्साहो न प्रदर्शितः । वधूस्तु तत्सर्वम् अन्यमनस्कतया समुत्थाप्य ततः नीतवती ।

रात्रौ भोजनं विधायाऽहं विष्टरे सुप्तवती । अकस्मात् जलं पातुं यदा समुत्थितवती तदा वध्वाः शब्दा मम कर्णेषु एवं प्रविशन्ति स्म—"मां जी, ग्रामात् न जाने किं किं व्यर्थ समुत्थाप्य इह आनीतवती । अहम् इमानि सर्वाण्यपि वस्तूनि प्रातः पात्रप्रक्षालिकायै (महरी) समर्पयिष्यामि । एकस्मिन् डिब्बापात्रे न जाने किमासीद् तत् चिपचिपायमानं द्रव्यम् ? ··मया तु तत्सर्वं नालिकायां प्रवाहितम् ।"

मम दृष्टिर्नालिकायां प्रवहत इक्षुरसस्योपरि निपपात । मयाऽनुभूतं यत् मम स्नेहः, मम ममत्वम्, मम आत्मीयत्वम् सर्वमेव तस्यां नालिकायां प्रवहति । जलपानस्य मम लालसैव समाप्ता । तत्क्षणमेवाऽहं ततो निवृत्य विष्टरम् उपविष्टवती ।

अग्रिमे दिवसे वधूः स्वकार्यालयं गन्तुं प्रारब्धवती । सा शिशुं स्नाप-

यित्वा मदधीनं च कृत्वा निर्दिष्टवती यत् कस्मिन् काले दुग्धं पायनीयम् । उभावपि तौ प्रातः स्वकीयकार्यव्यापारे निर्गतौ भवतः स्म तथा च सायं परिश्रान्तमानसौ प्रतिनिवृत्तौ अभूताम् । वधूस्तु प्रत्यागमनसमये प्रत्यहं शिरःपीडया ग्रस्ता किमपि कर्त्तुं नाऽशकत् । "अम्बे ! कृपया किञ्चित् चायपानं कारयतु" इति मोहनो यदा कथयति स्म तदा मयैव नित्य चायं प्रस्तूयते स्म । चायपानाऽनन्तरं तावुभावपि परिभ्रमणार्थं निःसरतः स्म । सायंकालीनं भोजनमपि मयैव निर्मीयते स्म । शिशुरपि च परिपाल्यते स्म । पुत्र-पुत्रवध्वौ च कदाचित् चलचित्रं द्रष्टुम्, कदाचित् कस्यचिद् सुहृदो गृहे कदाचित् क्लबस्थाने, कदाचिच्च नगरोद्याने भ्रमणार्थं गच्छतः स्म । तत्रैव च तौ प्रायः भोजनादिकमपि सम्पाद्य निवर्तेते स्म । तथाविधे काले मम भोजनस्य तु सर्वः समुत्साह एव समाप्तो भवति स्म किन्तु तयोर्मनसि तत्कृते न किमपि चिन्तनम्, अवधारणं विचारणं वा प्रवर्तते स्म ।

पात्र-प्रक्षालिका आगच्छति स्म । सा च केवलं पात्राणि प्रक्षाल्य प्रतिनिवर्त्तते स्म । गृहस्य सम्मार्जनं सज्जा च मयैव करणीयमासीत् । मम वार्धक्यग्रस्तं शरीरं शनैः शनैः भग्नतां प्राप्नोति स्म । एकस्मिन् सायकाले साहसं कृत्वाऽहं मोहनम् अकथयम् "पुत्र ! मम नगरदर्शनस्य महान् अभिलाषो वर्त्तते ।"

"एवम् अम्ब ! पश्य, सम्प्रति त्वावाम् एकस्य मित्रस्य गृहे गच्छाव । श्वस्तने दिवसे नगरे पर्यटनस्य प्रबन्धं सम्पादयिष्यामि ।" इत्युक्त्वा मोहनः पत्न्या समं क्वचित् प्रस्थितवान् । परन्तु स 'श्वस्तनो दिवसः' कदाचिदपि न समागतः । पञ्जरस्थं पक्षिणमिव चाऽहं निजां गतिं विलोक्य समुद्विग्ना सञ्जाता । केनचित् कयाचिद् वा समं वार्त्तालापमपि कर्त्तुमहं केवलम् अलुभ्यम् एव ।

किमहम् एतदर्थमेव नगरे समागता ? पूर्वं तु मया विचारितमासीद् यत् पुत्र-पुत्रवध्वोः सान्निध्ये मम वार्द्धक्याऽवस्था निश्चिन्ततापूर्वकं शान्तिपूर्वकं चाऽऽरामेण व्यतीता भविष्यति । प्रभुस्मरणं भजनं च कुर्वाणाया मम आयुषोऽवशिष्टः कालः शनैः शनैः सुखपूर्वकं समाप्तो भविष्यति । परमिह तु सर्वं विपरीतमिव प्रवर्त्तते अहं वारं-वारं स्वकीयमनसि विचारयामि स्म, आत्मानम् अन्वेषयामि स्म चिन्तयामि स्म च यन्मया कुत्र कश्च दोषः सम्पादितः ? ।

अस्तु, एवमेव कथमपि मासद्वयं व्यतीतमेव । यदा कदाचित् ग्रामे पुनः प्रतिगमनस्य विचारो मनसि समुदेति स्म तदा स्वयमेव तत्राऽवरोध-

विचारोऽपि जायते स्म यत् तत्र केन मुखेन गच्छेयम् ? ग्रामवासिनः किं कथयिष्यन्ति ? तेषां विचारेण त्वहं स्वसुतस्य समीपे समस्तं नागरं सुखम् अधिगच्छन्ती स्वस्थेन मनसा सप्रसन्ना च जीवनं यापयामि स्म । कथ पुनस्त-त्सर्वम्परित्यज्याऽस्यां वृद्धावस्थायाम् एकाकिनी ग्रामे निवत्स्यामि । अतः संकोचसमूह एव मम पादौ प्रतिरुणद्धि स्म ।

तस्मिन् दिने यदा वधूः स्वकार्यालयात् प्रत्यागता तदा साऽत्यन्तं प्रसन्ना प्रतीयते स्म । मह्यम् एकं पैकटं प्रयच्छन्ती प्रोवाच—"मां जी, पश्यतु भवती यत् किमहं भवत्कृते समानीतवती ।" मया तत् पैकटमुद्घाट्य दृष्टम् । तत्रैकं श्वेतशाटिकावस्त्रम् आसीत् । अहं हर्षातिरेकेण सगद्गदाऽभवम् । आशीर्वचसां वर्षामिव कुर्वाणा तां साधुवादस्वरैः समाच्छादितवती । तस्यां निशि च परिश्रान्ततया सद्य एव निश्चिन्ता सुप्तवती । किञ्चित्कालाऽनन्तर-मकस्मादेव चक्षूंषि समुन्मीलितानि । नेत्राणां का कथा वस्तुतः मम ज्ञान-चक्षूंष्येव समुद्घाटितानि । मम चक्षुषां पुरतः प्रवर्त्तमानाया भ्रमजवनिकाया एव अपसारः समवर्त्तत । तत्राऽहं पुत्र पुत्रवध्वोर्मध्ये सम्पद्यमानं वार्त्तालापम् एवमश्रौषम् —

"अम्बायाः इहाऽऽगमनेन वयं पर्याप्तं सौविध्यम् अनुभवामः । अहन्तु पुत्रजन्माऽनन्तरम् इदमेव विचार्य चिन्तिता आसं यत् कः खलु शिशुं गृहञ्चा-ऽत्रधास्यति । आवामुभावपि तु सेवाकार्ये व्यापृतौ भवावः । धात्रीनियोजने-नाऽपि समस्यायाः समाधानं नाऽभविष्यत् । कोऽज्ञास्यत् यद् शिशुर्दुग्धं पिबति आहोस्वित् धात्री एव पास्यति । तथा च न जाने गृहे विद्यमानानि कानि वस्तूनि सा नयेत् अथवा इतस्ततः कुर्यात् । तदनन्तरमपि तस्मै त्रिशतानि रूप्याणि तु दातव्यानि एव ।"—इति वधूप्रोक्तः स्वर आसीत् ।

"एवम्, अम्बाया आगमनेन शिशोस्तथा च गृहस्य समस्यानां समा-धानमस्माभिर्लब्धमेव । पुनश्च रात्रौ भोजनमपि सा निर्मापयति । कार्यालयात् प्रत्यागते तु तव भोजनस्य निर्माणे समुत्साह एव क्व भवति स्म ?"— इति मोहनस्य वाक्यमासीत् ।

"अत एव त्वद्य मया विचारितं यद् अम्बामहोदयायै किमपि किमपि प्रदातव्यं येन सा प्रसन्नतामनुभवेत् । चद्य मया तदर्थं पञ्चाशत् रूप्यकैरेकां शाटिकां क्रीत्वा प्रदत्ता । सा तु तामवलोक्य समुत्फुल्लनयना मह्यं बहून्याशी-र्वचांसि समुच्चारयितुमारब्धवती । मोहन ! दृष्टं त्वया ! कियान् अल्पव्यय-साध्यो व्यापारः—?" पुत्रवध्वा प्रोक्तम् एतद् वचनम् ।

तत्सर्वमाकर्ण्य त्वहम् आकाशादिव पतितवती। तत्र निशायापनमपि मत्कृते कठिनमासीत्। स्वस्मिन्नेव गृहे दौवारिकरूपेण धात्रीरूपेण वा निवसितुमहं नाऽभिलषामि स्म। यथा कथञ्चित् प्रातःकालः सञ्जातः। अहं शीघ्रमेव ग्रामं प्रतिगन्तुं समुद्यताऽभूवम्।

"पुत्र! मोहन! कृपया माम् अधुनैव ग्रामे प्रस्थातुं स्टेशनं प्रापय। प्रातः सप्तवादने प्रथमं ट्रेनयानं प्रयाति। मध्याह्नपर्यन्तमहं ग्रामं प्राप्स्यामि।"

"परन्तु अम्बे! कथमेतावती क्षिप्रता? अधुना तु त्वया नगरस्य भ्रमणदर्शनमेव न कृतम्। कतिचिद् दिनानि अपरमत्र निवसतु कृपया।"

"नहि पुत्र! न मया केवलं नगरमेवाऽपितु नगरस्य व्यवहारोऽपि बहुविधो दृष्टः।"

"परम् अम्बे! द्वे त्रीणि दिनानि वाऽपरं निवस। अहम् अवकाशदिने त्वां ग्रामं प्रापयिष्यामि।"

"न हि पुत्र! त्वं व्यर्थमेव मत्कृते समुद्विग्नो भवसि। अहं ग्रामस्य निरावृतं वातावरणं बहु स्मरामि। कृपया त्वं ट्रेनयाने मां प्रापय। अहं स्वयमेव ग्रामं प्रस्थास्यामि। त्वं निश्चिन्तो भव।"

मोहनो मम महान्तमाग्रहं निरूप्य रिक्शायानमानीय समागतः। प्रस्थानसमये अहं स्वपुत्रवध्वै तामेव शाटिकां प्रयच्छन्ती प्राह—"वधू! शिशोः कृते यदा काऽपि धात्री त्वया नियोक्तव्या तदा तदर्थमियमेव शाटिका प्रदातव्या।"—इत्युक्त्वा शाटिकां तस्याः करे समर्प्य वध्वाः किमपि कथनात् पूर्वमेवाऽहं शिशुं शिरसा चुम्बित्वा रिक्शायाने समुपविष्टवती।

विचारेषु भग्नता तदैव समवर्त्तत यदा मम ग्रामस्य स्टेशनं समागतम्। स्वकीयलघुमञ्जूषां समुत्थाप्य शनैरहं स्टेशने अवातरम्। तस्मात् लघुस्टेशनाद् बहिरागत्य एकस्य वृक्षस्याऽधस्तात् स्वकीयां लौहमञ्जूषां संस्थाप्य तत्राऽहं तथैवाऽऽरामं कर्त्तुं प्रारब्धवती यथा खल्वहं सहस्रकिलोमीटरपर्यन्तां

मरुभूमिम् उल्लंघ्य ग्रामसीमां स्पृशामि । वृक्षस्याऽधस्तात् स्थिताऽहं तत एव निजग्रामवाटिकानाम् आम्रमञ्जरीः पश्यामि तथा चोन्मुक्ते वातावरणे दीर्घं निःश्वस्य स्वस्थताम् अनुभवामि ॥



इत्येवं श्री प्रशस्येन मित्रेण शास्त्रिणा कृतम् ।
द्वादशानां कथानां यन्नव्यं सङ्कलनं त्विदम् ॥

नाना-रस-मनोभाव—समस्या-परिचायकम् ।
सहर्षं प्रस्तुतं बन्धो ! देवभाषा-समृद्धये ॥



• • •